# पञ्चमो रसरत्नकोशः

## प्रथमो रसलक्षणोल्लासः

### तत्र रसस्वरूपनिरूपणं नाम प्रथमं परीक्षणम्

[१]देहार्धे गिरिजैककस्तनलल्ज्जिह्वः[२] षडास्यः[3] सुर[४]-
श्रेणी चानतिकर्तृका फणिफणाटोपस्तु भालेक्षणः ।
[५]धिक्कुर्वन्नसुरानिभाजिनपटो [६]व्यामिश्रभूषाञ्चितो
योगध्यानमुपागतोऽवतु शिवः सर्वै रसैः संश्रितः ॥१॥

जीयाद् विसदृशो काचिदपूर्वेव सरस्वती ।
[७]यस्याः समभवच्चित्रं [८]काव्यरत्नाकरो महान् ॥२॥

पद्मिनीदलचलोदबिन्दुवच्चञ्चले जगति नित्यमेककम् ।
यच्छरीरमिह काव्यलक्षणं रामसंभ्रमजुषा-[९]मिहोज्ज्वलम् ॥३॥

काव्यमत्र विशदोक्तिविभ्रमस्फूर्जदूर्जितगिरां स्वयं स्फुरन् ।
[१०]अद्भुताद्भुतचमत्कृतिकारी यः[११] सतामनिशमुक्तिविशेषः ॥४॥

तत्सुवर्णघटितं स्वलंकृतं सुष्ठुरीतिधृतमप्यनर्हताम् ।
याति यावदिह[१२] नाश्रितं नवैर्जीवनैककरणैः स्फुटै रसैः ॥५॥

स्फुरद्वाग्ब्रह्मोद्यत्परिमलममे[१३]-यार्थघटना-
रसालं तत्स्वीय-प्रगुणमहिमाहंकृतिरसम् ।
फलं[१४] यत्तत्काव्यं जगति जयतात् सत्कवितरोः
परीपाको यस्य प्रकृतिमधुरः कोऽपि सहजः ॥६॥

---

[१] L. begins श्री णे य म.
[२] A. omits विसर्ग, L. ०ल्समज्जिह्व:, K. seems to have changed लस० to लल० by overwriting, but it can be deciphered both ways.
[३] K. L. omit विसर्ग
[४] L. सुरे०
[५] A. धि:कुर्वन्०, K. धिकुर्वन्
[६] L. व्यामिभूषां० (omits ०श्र०)
[७] K. यस्यां, L. यस्या
[८] K. L. काय०
[९] K. L. ०मिवोज्ज्वलम्
[१०] K. L. अद्भुताद्भु० (omit ०त०)
[११] K. L. omit विसर्ग
[१२] K. L. यावदिदमाश्रितं न चेज्जीवनैक०
[१३] A. ०मये यथार्थघटना
[१४] L. omits अनुस्वार



आदर्शो जगदाकृतेः कविगिरामावासभूमि[ः] परा
विश्रामः [१]कविचेतसां किमपि यत्संसारसारं परम् ।
आकल्पं कविकीर्तिबीजममलं सत्काव्यमुज्जृम्भते[२]
सद्वस्तूपरिवर्ति[३]-तत्वमपरं चारुवितवारां निधिः ॥७॥

यतो नृत्यं च काव्यं च कुर्याद्रसनिरन्तरम् ।
अतो रसा निरूप्यन्ते भरताचार्य-संमतात् ॥८॥

ननु कोऽयं रसो नाम पदार्थस्तद् विचार्यते ।
रस्यते वा सहृदयैः[४] स्वयं वा रस्यते रसः ॥९॥

सामाजिकान् रसयति ते वायं (वामुं) रसयन्ति च ।
रसनं[६] वा नटेनात्र चित्तवृत्ति नटस्य यः ॥१०॥

रसतीति रसो वा स्याद् रसयत्यथवा रसः ।
[७]रामः स्याद् बा न वेत्यादिप्रतीतिर्नटसंश्रिता[८] ॥

अथवा रस्यते सभ्यैं रामो(रसो)ऽयमिति तत्त्वतः ।
इत्यादिपक्षास्तद्विद्भिरादृता रसरूपणे ॥१२॥

विभावैर्जनितो भावोऽनुभावैरनुबोधितः ।
व्यभिचारिभिरास्फीतो रस इत्यभिधीयते ॥१३॥

*स चानुकार्ये रामादौ वर्तते मुख्यवृत्तितः[९] ।
तद्रूपताऽनुसन्धानान्नर्तकेऽपीति लोल्लटः ॥१४॥

व्यावर्त्य सम्यक्[१०](क्)-[११]मिथ्यात्वकोटिद्वयविलम्बिनः ।
ज्ञानात्तत्सदृशाकारप्रतीतेश्च निरासतः[१२] ॥१५॥

तत्तद्विलक्षणा-[१३]ज्ज्ञानाच्चित्ररूपक(तुरग)वन्नटे ।
सोऽयमित्येष(व) संवित्तिग्राह्यः[१४] सामाजिकैरिह ॥१६॥

---

[१] K. L. ०कृति०
[२] K. ०मुजृंभते० (जृं० is written in a peculiar way), L. ०मुकृभते
[3] K. L. ०वर्तिते०
[४] L. ०तो
[५] A. omits विसर्ग
[६] L. रसनां
[७] A. रसः
[८] K. L. प्रतीति नटसंश्रिताम्
* cf. K. P. IV (prose portions dealing with the four classical theories of Rasa) for 14-29 of the text.
[९] A. ०र्तितः
[१०] K. L. सम्यग्
[११] A. मिथ्यात्वात्, K. L. मिथ्याभ्यां
[१२] K. L. ०संतः
[१३] L. ०स्रामानाच्चित्र०
[१४] A. L. omit विसर्ग

वासनाभावितस्वीयकार्यप्रकटनेन च ।
विभावाद्यै-[१]र्नटेनैवोद्भासितैरनुमापितः[२] ॥१७॥

रसनीयत्वमासाद्य [3]वैलक्षण्यात् परस्य च ।
संभाव्यमानो रत्यादिः[४] स्थायित्वेन तदा त्विह ॥१८॥

असन्नपि प्रेक्षकाणां[५] चर्व्यमाणो[६] रसः स्मृतः ।
इति श्रीशङ्कुकाचार्यो रसव्यक्ति[७]न्यरूपयत् ॥१९॥

न [८]व्यङ्ग्यश्च न [९]तूह्यादिप्रत्ययोऽपि न(तु) युज्यते ।
स्थाय्येव भाव्यमानोऽत्र व्यापाराद्भावकत्वतः ॥२०॥

सत्त्वोद्रिक्त[१०]-प्रकाशेनानन्दप्राचुर्यसंविदः ।
विश्रान्तिस्थानसातत्यभोगभोज्यो[११] रसोऽथवा ॥२१॥

इति नायकभट्टानां मतमेतदुदीरितम् ।
[१२]अथाभिनवगुप्तार्यभट्टानामप्युदीर्यते ॥२२॥

*विभावैरनुभावैश्च सात्त्विकैर्व्यभिचारिभिः ।
[१३]स्वीयान्यदीयसंबन्धविशेषप्रवि[१४]-हाणतः ॥२३॥

साधारणैरभिव्यक्तो वासनात्मतया स्थितः ।
रत्यादिकः[१५] स्थायिभावो वेद्यान्तरविनाकृतः ॥२४॥

वाङ्मनो[ऽ]गोचरानेक-[१६]विद्वत्साधारणीकृतः ।
स्वीयाकार इवाभिन्नः सभ्यैः[१७] स्वविषयीकृतः ॥२५॥

विभावादिविभाव्यत्वात्तद्गतावधिजीवितः ।
चर्व्यमाणः पानकवद[१८]-न्यंत्सर्वं विलुप्य च ॥२६॥

मनसैक्यमिवागच्छन् सर्वाङ्गीणो[१९] भवन् स्वयम् ।
अलौकिकचमत्कारकारी[२०] कोऽपि रसः स्मृतः ॥२७॥

१ K. ०नटैर्नैवो०, L. नटैर्नैवो० २ L. ०मापतिः 3 L. वैलक्षि०
४ K. L. omit विसर्ग, A. ०स्थापितेन, ५ L. omits अनुस्वार
६ A. ०माणै ७ K. L. न्यवेरयत् ८ A. K. L. व्यंगश्च
९ A. कृत्याद्य०, K. L. तूह्यादि न प्रत्येयोऽपि युज्यते १० K. L. ०द्रिक्तः
११ A. ०भाज्यो १२ A. अत्रा०
* cf. S. R. VII 1352, 53 for 23, 24 above.
१३ A. स्वीयान्न० १४ A. ०प्रति० १५ A. omits विसर्ग
१६ A. omits ०वि० and leaves blank space for one letter.
१७ A. omits विसर्ग १८ A. ०हृत् अन्यत् १९ K. L. ०गीणां २० A. ०कार०



[१]स कोऽपि परिहारेणालौकिको ज्ञाप्यकार्ययोः ।
व्यञ्जितश्च विभावाद्यैश्चर्वणीयः स्मृतो बुधैः ॥२८॥

[२]लोकोत्तरः स्वसंवेद्यः प्रत्ययोऽप्युपपद्यते ।
[३]औपचारिक- कार्यत्वादीदृशस्तस्य भूषणम् ॥२९॥

लोको वेदस्तथाध्यात्मं प्रमाणं त्रिविधं स्मृतम् ।
प्राक्(ग्)-द्वया-[५]पेक्षयाऽत्र स्यादनुमानप्रमाणता ॥३०॥

दृष्टश्रुतार्थावगतस्यार्थस्य प्रतिपादनात् ।
धर्मार्थ-[६]साधकत्वेन रसभावोपदेशनम् ॥३१॥

यथा कवीनां हृदये याऽभूद्रामादिवासना ।
तद्वासितान्तःकरणान्नर्तकाद्भावदर्शनम् ॥३२॥

[७]तत्काव्यार्थं गम्यमानरसादेर्भाजनं जनाः ।
सामाजिका, यथा रामः सुखी दुःखी तथा पुनः ॥३३॥

रामावस्थां भावयन् स सोऽहमस्मीति नर्तकः ।
अनुभावी भवन् भावो भवति प्रेक्षकान् प्रति ॥३४॥

[८]तद्वासनावासितान्तःकरणं नर्तकं च ते ।
दृष्ट्वा स राम एवाय-[९]मनुभावानुभावनात् ॥३५॥

तद्भावभावितस्वान्ता[:] स्यू रसास्वादभाजनम् ।
अनुमेयो रसो जात[१०] इत्याचार्यमते स्फुटम् ॥३६॥

रसयन्ती वैरिरसान् गच्छन्त्यत[११] एव तानपि रसन्ती ।
यमरसना-खड्गलता यत्पाणौ राजतेऽ[१२]-नुरणम् ॥३७॥

इति श्रीराजाधिराज-[१३]कालसेनमहीमहेन्द्रेण विरचिते संगीतराजे[१४] षोडशसाहस्र्यां संगीतमीमांसायां रसरत्नकोशे रसलक्षणोल्लासे रसस्वरूपनिरूपणं[१५] प्रथमं परीक्षणं समाप्तम्[१६] ।

१ A. रसः कोऽपि विहारेणा० २ L. लौको०
३ A. उप०, K. L. can be deciphered as अपः or उप०
४ K. L. कार्यत्वमीदृश० ५ A. ०प्रक्षया
६ L. साधके० (the हलन्त mark on ०क्० of प्राक् in the preceding verse in K. has been deciphered as ॆ मात्रा)
७ A. तत्कार्यर्थि गम्यमाना रसादेर्भाविरंजनाः ८ K. L. तद्वासिना०
९ K. L. ०मनुभावविभावनात् १० A. जातः, L. जातं
११ A. K. L. गच्छंत्वित १२ K. L. सुरणम् १३ K. L. श्रीकुंभकर्णविरचिते
१४ L. ०रोजे १५ K. L. add नाम १६ K. L. omit समाप्तम्

# रसतत्त्वनिरूपणं नाम द्वितीयं परीक्षणम्

रसयन्ति द्विरसना यदग्रस्थ-[1]रसागताः ।
षडास्यरसनाग्रस्थ-रसवद्रसनीयकम् ॥१॥

कथं रसत्वमेतेषामिति सम्यङ्[2] निरूप्यते ।
रसः कट्वादिवत्[3] किं वा षाड्वादिवदित्यथ[4] ॥२॥

[5]निष्पाद्य [6]इत्याशङ्क्यैवासूचयन् मुनिसत्तमः ।
विभावस्यानुभावस्य तथा च व्यभिचारिणः ॥
स्थायिसंयोगसंपत्तेः[7] शृङ्गाराद्यो[8] रसो भवेत् ॥३॥

[9]अव्युत्पन्नमिदं सूत्रमिति कश्चिदनूनुदत् ।
अहेतुत्वेन[10] भावानां हेतुत्वस्यानुकीर्तनात् ॥४॥

प्रमाद्यं, लोल्लटोऽत्राह घटेतेदं यदा[11] भवेत् ।
षष्ठीसमासः, किं [12]त्वत्र समासोऽयं [13]तृतीयया ॥५॥

विभावाद्यैः[14] स्थायिनोऽत्र संयोगस्तन्मते मतः ।
[15]अर्थाक्षिप्तस्थायिनोऽत्र भवेत् सापेक्षिता ततः ॥६॥

[16]सापेक्षमसमर्थं स्यात् सामर्थ्याभावतस्ततः ।
[17]समासाभावतः [18]षष्ठीसमासः [19]स(सं)मतस्त्विह ॥७॥

इति कीर्तिधराचार्यमतस्यानुमतेन हि ।
स्वसामर्थ्यात् पदविधे-[20]निर्माता पृथिवीश्वरः ॥
षष्ठीसमासमाश्रित्या[21]-श्लोकयत् सूत्रमैश्वरम् ॥८॥

---

[1] L. adds ०रस्थ०
[2] A. सम्यक्, K. सम्यग्, L. सम्यग्र
[3] A. ०दिकं
[4] A. ०त्यथा, K. L. ०त्यद्य
[5] K. L. निःपाद्य
[6] K. इत्याशंकैता०, L. इत्याशकैवा०
[7] L. omits विसर्ग
[8] L. adds विसर्ग
[9] K. अत्यु०, L. अत्युन्नमिदं
[10] A. अहेतुत्वानुभावानां
[11] A. यथा
[12] A. तत्व०
[13] A. K. L. त्रितीयया (०या looks like ०था)
[14] L. विभाद्यैः
[15] A. अर्थादित०
[16] K. L. सापेक्ष्य०
[17] A. समासभावतः
[18] L. घष्ठी०
[19] L. समतस्त्रिह
[20] A. K. L. ०निर्माता (omit रेफ)
[21] A. ०माश्रित्य श्लोकयेत्



भावो विभावजनिता चित्तवृत्तिरिहेरिता ।
शरीरेन्द्रियवर्गस्य विकारस्य विधायिनी ॥९॥

भावो निगद्यते तेषां देहेन्द्रियविकारिणो ।
विभावजनिता चित्तवृत्तिस्तद्वार्तिके यथा ॥१०॥

*[1]विभावेनाहृतो[2] [3]योऽर्थस्त्वनुभावेन कथ्यते ।
वागङ्गसत्त्वाभिनयैः[4] स[5] भाव इति संज्ञितः[6] ॥११॥

वागङ्गमुखरागैश्च सत्त्वेनाभिनयेन[7] च ।
कवेरन्तर्गतं भावं[8] भावयन् भाव उच्यते ॥१२॥

विभावो हि पुरोवर्तिवस्तुनो दर्शनं मतम् ।
तद्द्वारेण चित्तवृत्तेर्विकारः [9]प्रतिपद्यते ॥१३॥

अनुभावेन तद् बालावबोधाय निरूप्यते ।
[10]निर्विकल्पकतः पूर्वं किंचिदस्तीति तत्परम्[11] ॥१४॥

स्त्रीति तामवधार्याथो[12] केयमित्थं[13] विचारयन् ।
पूर्वानुभूतस्नेहस्य [14]भावनाभावितेन च ॥१५॥

[15]मनसा मत्प्रिया सेयमिति चित्तविकारवान् ।
तदेकीभावतो भावावस्थः स्यात् प्रेक्षकस्तदा ॥
एवं विभावादुत्पत्तिर्भावस्य प्रतिपादिता ॥१६॥

यथा—

सेयं ममाङ्गेषु सुधारसच्छटा[16] सुपूरकर्पूरशलाकिका[17] दृशोः ।
मनोरथश्रीर्मनसः शरीरिणी[18] प्राणेश्वरी लोचनगोचरं गता ॥१७॥

दैवादहमद्य तया तरलायतनेत्रया वियुक्तश्च ।
अविरलजलदकरालः[19] कालः समुपागतश्चायम् ॥१८॥

॥ इत्यादि ॥

[Quoted in K. P. IV 25, 26]

---

* cf. N. S. VII 1, 2 for 11, 12 above.
[1] K. विभावो०
[2] A. ०हृता
[3] A. यो[ऽ]र्थः स्वानुभावेन, K. L. यो[ऽ]र्थः सो[ऽ]नुभावेन
[4] L. ०नयौः
[5] A. स्वभाव
[6] A. ०कः, L. ०तौः
[7] L. ०नायन
[8] L. omits भावं
[9] K. L. प्रतिपाद्यते
[10] L. सिर्वि०
[11] A. तत्पराम्
[12] K. ०धार्यर्थो, L. धार्यर्था
[13] K. L. ०मित्वं
[14] A. भाविता०
[15] A. omits this line and the next one.
[16] A. सुधारसस्थसुधासुकर्पूर०
[17] K. L. ०शिलाकिका
[18] A. ०रिणां
[19] K. L. अविरलविलोलजलदः कालः समुपागत०

स एव भावः प्रसन्नमुखरागललिताङ्गः[१] ।
लीलादिविभावप्रति-[२]पत्तावनुभावत्वमेति ॥१९॥

[३]एवं विभावानुभाव-व्यभिचारिसमागमात् ।
[४]क्रीडंस्तया सह पुमान् शृङ्गारी जायते [५]तथा ॥२०॥

*पुरुषः प्रमदायुक्तः शृंङ्गार इति संज्ञितः ।
एवमेषां तु संयोगाद् भावोत्पत्तिनिरूपिता ॥
[६]स स्थाय्येव तीव्ररूपो रसो भवति भासुरः ॥२१॥

या [७]त्वकारणता प्रोक्ताऽनुभावानां तु साऽन्यथा ।
तीव्रसंवेदनगताभिनयप्रतिपाद्यता ॥२२॥

भावस्य [८]रसता तस्माद् भावावस्थाजुषोऽस्य च ।
हेतुत्वमनुभावानां सामाजिकधियं प्रति ॥२३॥

†अत्रार्थे भरताचार्यसंमतिः सम्यगीर्यते ।
"यथा बहुद्रव्ययुतैर्व्यञ्जनैर्बहुभिर्युतम् ॥
आस्वादयन्ति भुञ्जाना भक्तं भक्तविदो जनाः ॥२४॥

भावाभिनयसंबन्धान्[९] स्थायिभावांस्तथा[१०] बुधाः ।
आस्वादयन्ति मनसा [११]तस्मान्नाट्ये रसाः स्मृताः ॥२५॥"

"यथा गुडादिभिर्द्रव्यै-[१२]र्व्यञ्जनौषधिसंयुतैः ॥"
[१३]निर्वर्त्यन्ते षाडवाद्या, नानाभावोपसंगताः ॥२६॥

स्थायिनो [१४]रसतां [१५]भावास्तथैव प्राप्नुवन्ति हि ।
कारणत्वे समानेऽपि षाडवव्यपदेशताम् ॥२७॥

---

[१] K. L. omit विसर्ग [२] A. ०पत्तानुभामन्वेति [३] L. एव
[४] K. L. क्रीड० (omit अनुस्वार) [५] A. यथा
* cf. N. S. VI 46
[६] K. L. सं स्थायोव तीव्ररूपो रसी (L. त्सी)
[७] L. त्वा० [८] L. रसाता
† cf. N. S. VI 32.33 and S. R. VII 1356, 57 for 24-26 above.
[९] A. संवद्धान् [१०] L. ०स्तथो [११] A. तस्मात्स्वाट्य (?)
[१२] A. ०द्रव्यैः व्यञ्जनौपधि०, K. L. ०द्रव्यै व्यञ्जनौषधि०
[१३] K. L. निवर्तते [१४] L. रसातां
[१५] L. भावात्स्तथैव



कूष्माण्डादि यथाऽऽप्नोति न तथा कारणान्तरम् ॥२८॥

एवं विभावादिवर्गे भावाः[१] स्थायिन एव हि ।
[२]रसत्वव्यपदेशस्य भाजनं नान्यदिष्यते ॥२९॥

नन्वत्र भारते सूत्रे विभावाद्या रसस्य हि ।
हेतुत्वेन समादिष्टाः, कविवासनया पुनः ॥३०॥

रसेभ्यो भावनिष्पत्तिर्वैपरीत्यमिदं भवेत् ।
नैवमत्र स एवाह "कश्चिदर्थः प्रवर्तते ॥
न रसेन विना"-ऽत्रैव[३] संमतिस्तस्य दृश्यते ॥३१॥

*"न भावहीनोऽस्ति रसो न भावो रसवर्जितः ।
परस्परकृता सिद्धिस्तयोरभिनये भवेत्[४] ॥३२॥

व्यञ्जनौषधिसंयोगो यथान्नं स्वादुतां नयेत् ।
एवं भावा रसाश्चैव भावयन्ति परस्परम् ॥३३॥

यथा बीजाद् भवेद् वृक्षो वृक्षात् पुष्पं फलं यथा ।
तथा मूलं रसाः सर्वे ततो (तेषु) भावा व्यवस्थिताः" ॥३४॥

[५]आस्वाद्यत्वाद्रसे सिद्धे भावादिभ्योऽपि[६] तद् भवेत् ॥३५॥

यस्तु कस्यचिदाक्षेपो रसभावोद्भवं प्रति ।
स नक्षत्रप्रश्नरूपो मुण्डयित्वा शिरः परम् ॥३६॥

तस्मात् परमतापोहादाचार्यानुमते स्थितः ।
[७]कालसेनः समावत्ते भावेभ्यो रसनिर्वृतिम्[८] ॥३७॥

दृश्यते च रसेभ्योऽपि रसानामुद्भवो यथा ॥३८॥

†"शृंङ्गारप्रभवो हास्यः[९] करुणो रौद्रसंभवः ।
अद्भुतो जायते वीराद् [१०]बीभत्साच्च भयानकः ॥३९॥

---

[१] A. omits विसर्ग [२] L. रसटत्व० [३] L. adds अनुस्वार
* cf. N. S. VI 36-38 for 32-34 above.
[४] A. K. L. भवेदिति
[५] L. आस्वाद्यात्वा इमि [६] K. L. भावादिव्योपि
[७] K. L. कुम्भकर्णः [८] L. ०निर्वृंति
† cf. N. S. VI 39-41 for 39-41 of the text. [९] K. L. omit विसर्ग
[१०] L. reads बीभ्यनायकयोस्तस्याश्रयत्वं मन्वते परे। in the place of बीभत्साच्च भयानकः। शृंङ्गारानुकृति० and takes up the link from ०र्या तु स तु हास्यरसो मतः ।

शृङ्गारानुकृतिर्या तु स तु हास्यरसो मतः ।
करुणः कथ्यते सद्भिः कर्म [१]रौद्ररसस्य यत्" ॥४०॥

कर्म यच्चापि वीरस्य सोऽद्भुतः सद्भिरुच्यते[२] ।
भयानको भवेत् सोऽत्र यद् बीभत्सस्य दर्शनम्" ॥४१॥

एवं रसास्तु चत्वारः कस्यचित् [३]संमते मताः ।
प्रधानत्वेन नान्ये तु तत्कार्यत्वात् पृथङ् मताः ॥४२॥

ननु शृंङ्गारानुकृतेर्हास्यता नोपपद्यते ।
कृतानुकरणत्वाच्च [४]नाट्यस्य मुनिसंमते ॥४३॥

एवं यो योऽनुकारः स्यात् [६]स स हास्यत्वमाप्नुयात् ।
[७]नैवं, संचारिपक्षस्य [८]सिद्ध्यर्थमिदमादृतम् ॥
तथा चाचार्य एवात्र [९]वक्ष्यत्येतद्विवक्षया ॥४४॥

*"सर्वेषां [१०]समवेतानां रूपं यस्य भवेद् बहु[११] ।
स मन्तव्यो रस[:] स्थायी [१२]शेषाः संचारिणो मताः[१३]" ॥४५॥

न च भावेषु मन्तव्या बुधैः संचारिता[१४] यतः ।
रसानामपि सा दृष्टेत्यतोऽसौ व्याकृतिर्मता ॥४६॥

शृङ्गारपूर्वानुकृतिरिति मध्यपदस्य तु ।
लोपे समासो मन्तव्यस्तस्मात् सुवचमित्यदः ॥४७॥

कैशिकीप्रभवत्वाच्च शुचेस्तस्य[१५] भिदा स तु ।
नर्मादिषु निमित्तस्य वशाद्धास्यस्य संभवः ॥४८॥

तथा रौद्रस्याऽरभट्यां वधादेस्तु निमित्ततः ।
उत्पत्तिः[१६] करुणस्यापि, सात्त्वत्यां वीरकर्मतः ॥४९॥

निमित्तादद्भुतोत्पत्ति,-स्तथा बीभत्सदर्शनात् ।
भयस्य संभवः [१७]साक्षाल्लोके स्याद्रौद्रकर्मणः[१८] ॥५०॥

[१] L. रोद्र०
[२] A. ०रिप्यते
[३] L. समेंते
[४] A. अंगुष्ठरागानु०
[५] K. L. सासाद्य
[६] A. स हास्यंत्वमवाप्नुयात्
[७] A. omits नैवं संचा०
[८] K. L. सिद्धार्थमिदमावृतम्
[९] A. वक्षते तद्
* cf N. S. VII 119
[१०] L. समावतानां
[११] A. adds विसर्ग
[१२] A. रसा:
[१३] K. L. omit विसर्ग and add ॥ इति ॥
[१४] K. L. ०तो
[१५] K. L. ०स्या
[१६] K. L. उत्पत्ति
[१७] K. L. सांक्षा लोके
[१८] L. ०कर्मिणः



निमित्ताभावतः[१] स्वात्मारामशान्त इहोदितः ॥५१॥

तथा चोक्तम्—

*न यत्र दुःखं[२] न सुखं न चिन्ता न [३]द्वेषमोहौ न च काचिदिच्छा ।
रसस्तु शान्तः कथितो मुनीन्द्रैः सर्वेषु भावेषु [४]समप्रमाणः ॥५२॥
॥ इति ॥

तथा च कोहलाचार्यः शान्तप्रकृतिकान् रसान् ।
समाचष्टे तथा चैव शान्तप्रविलयानपि ॥५३॥

यथा—

स्वीयं निमित्तमासाद्य शान्तादुत्पद्यते[५] रसः ।
पुनर्निमित्तापाये च शान्त एव प्रलीयते[६] ॥५४॥

एवं रसाश्च भावाश्च[७] [८]भजन्ते च परस्परम् ॥५५॥

सृष्टिं[९], न च विभाव्येभ्यो [१०]निष्पद्यन्ते रसा अपि ।
किन्तु स्वकनिमित्तेन व्यक्तीभावं भजन्ति ते ॥५६॥

यथा प्रधानं[११] महतः कारणं लोकवर्त्मनि ।
लभ्यते, महतः कश्चिन्न हेतुः[१२] परमार्थतः ॥५७॥

प्रधाने[१३] साम्यावस्थायां लयं यान्ति यथा गुणाः[१४] ।
तथा शान्ते विलीयन्ते रसाः [१५]साम्यमुपागताः ॥५८॥

आत्मारामस्वरूपा याऽवस्था तस्यामिमे रसाः ।
प्रलीयन्ते, ततो नैव रसः शान्तः पृथग् भवेत् ॥५९॥

एवं रसा भवन्त्यष्टौ भरताचार्यसंमते ॥६०॥

सशान्ता नव वा [१६]कैश्चिदुक्तास्तान् विवृणे यथा ।
†शृङ्गारहास्यकरुणा [१७]रौद्रवीरभयानकाः ॥६१॥

बीभत्साद्भुतशान्ताश्च नवैतेऽत्र[१८] रसाः स्मृताः ।
एतेषां लक्षणं वक्ष्ये पूर्वाचार्याभिसंमतम् ॥६२॥

[१] A. ०भावत, K. L. ०भावता or भावना
* cf. N.S. B. VI p. 104 for 52,54 above.
[२] L. दुःखेन
[३] L. द्वेपेमोहो
[४] L. समाण इति
[५] L. ०द्यंते
[६] A. प्रलीयेते
[७] L. omits ०श्च
[८] K. L. न भजंते परस्परम्
[९] L. omits अनुस्वार
[१०] A. K. L. निःप०
[११] A. omits अनुस्वार
[१२] K. L. omit विसर्ग
[१३] K. L. प्रधान
[१४] K. गुणः
[१५] K. L. सम्यगुपासिताः
[१६] K. L. कै(L. के०)श्चिदुक्तस्तान्
† cf. N. S. VI 15 and S. R. VII 1358, 59.
[१७] L. रोद्र०
[१८] A. नवै तत्र

[अथ शृङ्गारः—]

शृङ्गारो मूर्तिमानेष राजतेऽयं रसाधिपः ।
सद्वृत्तिभिः परिवृतो[1] [2]राज्ञीराजिभिरन्वहम् ॥६३॥

*इति श्रीराजाधिराजश्रीकुम्भकर्ण (A. राजाधिराजकालसेन०) महीमहेन्द्रेण विरचिते संगीतराजे षोडशसाहस्र्यां संगीतमीमांसायां रसरत्नकोशे रसलक्षणोल्लासे रसतत्त्वनिरूपणं (A. adds नाम) द्वितीयं परीक्षणम् ॥

---

[1] A. पन्तिो [2] A. राज्ञामाजिभि०

* A. does not read the colophon here, but reads it after the 5th. verse of the next परीक्षण; the numbering of verses is consecutive upto the colophon in A. There seems to be much confusion towards the end of this परीक्षण. The author's proposed treatment of the nine Rasas (vide—एतेषां लक्षणं वक्ष्ये पूर्वाचार्याभिसंमतं ॥६२॥) abruptly ends as soon as it is begun in verse 66. It appears that the portion noticed in I. J. M. in the end of the third परीक्षण of the concluding उल्लास of नृत्यरत्नकोश (pp. 471-75 ultra) was originally a part of the text in continuation of verse 66 above. Twenty-three verses of the said portion seem to be pertinent here and hence they have been reproduced by the Editor. For notes of parallel references for these verses in other texts; see pp. 471-75 ultra.

[सुखप्रायेष्टसंपन्नऋतुमाल्यादिसेवकः ।
पुरुषः प्रमदायुक्तः शृङ्गार इति संज्ञितः ॥६४॥

ऋतुमाल्यालंकारैः प्रियजनगान्धर्वकाव्यसेवाभिः ।
उपवनगमनविहारैः शृङ्गाररसः समुद्भवति ॥६५॥

नयनवदनप्रसादैः स्मितमधुरवचोधृतिप्रमादैश्च ।
मधुरैश्चाङ्गविकल्पैस्तस्याभिनयः प्रयोक्तव्यः ॥६६॥

॥ इति शृङ्गारः ॥१॥

॥ अथ हास्यः ॥

विपरीतालंकारैर्विकृताचाराभिधानवेषैश्च ।
विकृतैरङ्गविकारैर्हसतीति [रसो] हास्यः ॥६७॥

तस्यौष्ठनासाकपोलस्पन्दनदृष्टि-व्याकोशाकुञ्चनस्वेदास्यरागपार्श्वग्रहणादिभिरनुभावैरभिनयः प्रयोक्तव्यः ।

स्मितमथ हसितं विहसितमुपहसितं चापहसितमतिहसितम् ।
द्वौ द्वौ भेदौ स्यातामुत्तममध्यमाधमप्रकृतौ ॥६८॥



विकृताचारैर्वाक्यैरङ्गविकारैर्विकृतवेषैश्च ।
हासयति जनं यस्मात्तस्माद् ज्ञेयो रसो हास्यः ॥६९॥

॥ इति हास्यः ॥२॥

॥ अथ करुणरसः ॥

इष्टवधबन्धदर्शनाद् वा विप्रियवचनस्य संश्रयाद् वापि ।
एभिर्भावविशेषैः करुणरसो नाम संभवति ॥७०॥

सस्वनरुदितैर्मोहागमैश्च परिदेवितैरनेकैश्च ।
अभिनेयः करुणरसो मनुजैर्देहायासाभिघातैश्च ॥७१॥

॥ इति करुणरसः ॥३॥

॥ अथ रौद्ररसः ॥

युद्धप्रहारपातन विवृतच्छेदविदारणैश्चैव ।
एभिश्चार्थविशेषैश्चास्याभिनयः प्रयोक्तव्यः ॥७२॥

॥ इति रौद्ररसः ॥४॥

॥ अथ वीरः ॥

स्थितिधैर्यवीर्यगर्वैरुत्साहपराक्रमप्रभावैश्च ।
वाक्यैश्चाक्षेपकृतैर्वीररसः सम्यगभिनेयः ॥७३॥

उत्साहाध्यवसायादि-विषादित्वादविस्मितात् ।
मोहाद् विविधादर्थविशेषाद् वीररसो नाम संभवति ॥७४॥

॥ इति वीररसः ॥५॥

॥ अथ भयानकः ॥

विकृतरस(व)सत्त्वदर्शनसंग्रामारण्यशून्यगृहगमनात् ।
गुरुनृपयोरपराधकृतकश्च भयानको ज्ञेयः ॥७५॥

गात्रमुखदृष्टिभेदैरूरुस्तम्भाभिवीक्षणोद्वेगैः ।
सन्नमुखशोष-हृदयस्पन्दनरोमोद्गमैश्च भयम् ॥७६॥

एतत् स्वभावजं सत्त्वसमुत्थं तथैव कर्तव्यम् ।
पुनरेभिरेव भावैः कृतकं मृदुचेष्टितैः कार्यम् ॥७७॥

करचरणवेपथुगात्रस्तम्भसंकोचहृदयकम्पनेन ।
शुष्कौष्ठतालुकण्ठैर्भयानको नित्यमभिनेयः ॥७८॥

॥ इति भयानकः ॥६॥

॥ इति (अथ) बीभत्सो रसः ॥

अ[न]भिमतदर्शनेन गन्धरसस्पर्शशब्ददोषैश्च ।
उद्वेजनैश्च बहुभिर्बीभत्सरसः सम्यगभिनेयः ॥७९॥

मुखनेत्रविकूणन-नासाप्रच्छादनानमितास्यैः ।
अव्यक्तपादपतनै-र्बीभत्सरसः सम्यगभिनेयः ॥८०॥

॥ इति बीभत्सः ॥७॥

॥ अथाद्भुतो रसः ॥

यस्त्वतिशयार्थयुक्तं वाक्यं शिल्पं च कर्मरूपं च ।
तत्सर्वमद्भुतरसे विभावरूपं हि विज्ञेयम् ॥८१॥
स्पर्शग्रहोल्लुकसनैर्हाहाकारैश्च साधुवादैश्च ।
वेपथुगद्गदवचनैः स्वेदाद्यैरभिनयस्तस्य ॥८२॥

॥ इत्यद्भुतो रसः ॥८॥

॥ अथ शान्तो रसः ॥

शमस्थायी भवेच्छान्तः सर्वत्र समदर्शनः ।
तत्त्वज्ञानोद्गतोऽथो स तमोरागपरिक्षयात् ॥८३॥
प्रत्यक्षभूमित्रितयोपारूढत्वेन नर्तकः ।
लोकस्यैव स्वभावस्य वासनारूपभेदतः ॥
स्तम्भादिभिः प्रयुज्येत एवं शान्तरसात्मता ॥८४॥
एतेषामनुभावास्तु ज्ञेया राजोपदेशतः ॥८५॥

॥ इति शान्तरसः ॥९॥]

---

## रसाश्रयो नाम तृतीयं परीक्षणम्

यत्र भान्ति रसाः सर्वे मूर्ता इव महेश्वरे ।
स्वस्वोपभोगभोग्या[:][१] स्युर्गिरिजाद्यैर्नमामि तम् ॥१॥

ननु चैष रसो नाम किमाश्रय इहेष्यते ।
[२]नटनायकसभ्यास्तु केषाञ्चन तदाश्रयाः[३] ॥२॥

[४]नटोऽनुकरणत्वेन भावकः पात्रमुच्यते ।
सभ्यनायकयोस्तस्याश्रयत्वं मन्वते परे ॥३॥

न [५]स सभ्ये भावकत्वरसिकत्व[६]-प्रयोगतः ।
[७]तावन्मात्राश्रय इति शङ्कनीयं न(नु) कर्हिचित् ॥४॥

निर्वेवाद्य[८]-नुभावास्तु न स्युर्नर्तकगोचराः ।
रसाविष्करणं कस्मात्[९] सामाजिकजनस्य तु[१०] ॥५॥

तेषु यद्गदिता [११]तज्ज्ञैर्विगता रसभावना ।
[१२]ततो नायक एवात्र रसस्याश्रय इष्यते ॥६॥

ननु प्रवर्ततां[१३] नाम कथमेष निराश्रयः ।
[१४]मालत्यादि तदिति चेन्नानौचित्याद्[१५] घटेत हि ॥७॥

अत्र केचित् समाधानमाहु-[१६]र्मालतिकामुखाः (?) ।
[१७]शब्दयोषिन्मात्रपरा[:] स्यू रिपौ रावणादिकाः[१८] ॥८॥

---

[१] K. L. ०भोग्यास्तु गिरि०  [२] A. नट्ट०
[३] K. L. ०श्रयः  [४] A. नटानु०
[५] A. च  [६] K. L. ०रसिकत्वा०
[७] A. तावान्मा०  [८] A. ०दाद्या०  [९] A. omits ०त्
[१०] A. reads the colophon to the preceding परीक्षण after this verse.
[११] A. K. L. तज्ञै०  [१२] A. नातो
[१३] A. K. L. omit अनुस्वार
[१४] A. gives dots for मालत्या० followed by ०दि इति
[१५] K. L. ०त्यात्  [१६] K. L. माल० (omit रेफ)  [१७] K. L. शब्दायोषि०
[१८] A. omits ०दिकाः and gives dots; L. रावणोदिकाः (the हलन्त mark on ०त of चेन्नानौचित्यात in verse 7 in K. has been deciphered as (`) mātrā on the (ा) mātrā of ०णा०)

ततः सामान्यतः स्मृत्यारूढा योषिन्मुखाभिधाः[1] ।
सामाजिकालम्बनत्वं भजन्त इति साम्प्रतम् ॥९॥

प्रतिलम्भे विशेषेण विना दोषोऽस्ति चेन्न तत् ।
दृष्टे सामान्यतः कस्मिंश्चित् पदार्थे नृणामिह ॥१०॥

ईदृग्गुण[2] इति प्रायः स्मरणस्योदये[3] भवेत् ।
न चैवं दुःखरूपत्वात् [4]करुणादिरिहापतेत् ॥११॥

तत्प्रधानप्रबन्धानामनुपादेयता यतः ।
सर्वोऽपि [5]प्रेक्षकेष्वेव रसः पर्यवसीयते ॥१२॥

न [6]चैवमनुपपत्ति-[7]मूर्छोद्वेगादिकस्य हि ।
मूर्छोद्वेगादिकस्यात्र [8]क्रमगोचरता मता ॥१३॥

[9]समाधानमपरथा केचिदत्रा-[10]भ्यधुर्यथा ।
सभ्यचेतसि वर्तेत वासनारूपतो रसः ॥१४॥

तेन [11]नालम्बनादीनामपेक्षां कुरुते रसः ।
यत्प्रसिद्धालम्बनताऽस्य च स्थायिनि दृश्यते ॥१५॥

निर्विकल्पकमत्रेष्टं[12] प्रमाणं मुनिनोदनात् ।
अनुमितो भावनया साक्षाद् वं क्रियते तु सः ॥१६॥

रसत्वेऽ[13]-नुमिते तेन [14]ताटस्थ्यं भावना श्रयेत् ।
आदेयताऽनाकलनात् करुणादेरपीष्यते ॥१७॥

सभ्योपादेयता तस्य दुःखात्मकतयाऽत्र तु ।
वैलक्षण्यादुभयस्य[15] न साक्षादीक्ष्यतेऽपि च ॥१८॥

न चानुभावं जनयेत्तं तमत्र [16]रसस्य तु ।
अभाव्यमानं[17] सहसा तस्य चान्यगतस्य च ॥१९॥

[1] K. L. omit विसर्ग
[2] A. ०णा
[3] A. स्मरस्योदयो, L. स्मरणस्योदयो
[4] A. करणादि०
[5] A. प्रत्येकेष्वेव
[6] K. L. चैवमनुजांपत्तिर्मूर्छो०,
[7] A. omits ०र्मूर्छोद्वेगादिकस्य हि । without indicating the omission.
[8] A. क्रमा०
[9] K. L. समाधीन०
[10] K. L. ०प्यबु०
[11] K. L. चालंब०
[12] L. ०मत्रैष्टं
[13] A. न मते
[14] K. L. तटस्थं
[15] In K. वैलक्षण्य० is clear but ०दु० is illegible, it appears that the paper had got stuck up at this point. L. वैलक्षण्यमुनयस्य
[16] K. L. रसः स तु
[17] A. omits अनुस्वार, L. adds यं before सहसा



अन्वयव्यतिरेकाभ्यां[1] सम्यग् भावनिष्यते ।
परानन्दस्य[2] जनकं [3]नित्यस्यानतिशायिनः ॥२०॥

प्रवृत्तिरपि तत्रैव घटते हि मनीषिणः ।
इति सर्वमिदं सम्य(ग्) रमणीयतमं मतम् ॥२१॥

एवं सति नृपेणोक्तो नृप एव रसाश्रयः ।
एवं रसाश्रये ज्ञाते [4]रसलक्ष्म निरूप्यते ॥२२॥

एवं रसाश्रयं सम्यक्(ग्) राजा सर्वरसाश्रयः ।
[5]रसनाप्रस्फुरत्-सर्वरसः सम्यक्(ङ) [6]न्यरूरुपत् ॥२३॥

इति [7]राजाधिराज-[8]कालसेनमहीमहेन्द्रेण[9] विरचिते संगीतराजे षोडशसाहस्र्यां संगीत-मीमांसायां रसरत्नकोशे रसलक्षणोल्लासे रसाश्रय[10]-परीक्षणं तृतीयं [11]समाप्तम् ॥

---

[1] L. ०रैकाभ्यां
[2] L. omits ०स्य
[3] L. नित्यसा०
[4] K. L. सलक्ष्मण
[5] A. रसानग्र०
[6] L. न्यरूपत्
[7] K. L. add श्रीमहा० L. repeats श्रीमहाराजाधिराज०
[8] K. L. ०श्रीकुम्भकर्ण०
[9] K. L. omit ०महीमहेन्द्रेण
[10] L. ०श्रये
[11] K. L. omit समाप्तम्

# रसलक्षणं नाम चतुर्थं परीक्षणम्

[1]शृङ्गारमेव सकलेषु रसेषु मुख्यं [2]मन्ये गुणागुणविशेषविवेकदक्षः ।
[3]यत् स्वीयमर्धमपहाय [4]तनोर्बभार [5]तत्राद्रिराजतनयार्धममोच्यमीशः ॥१॥

धर्मार्थकामाः सममेव सेव्या इतीतिहासस्य च मूलमेषः ।
शृङ्गारनामा रस इत्यतोऽयमादौ मया लक्षणमुच्यतेऽस्य ॥२॥

[6]पुंनार्योश्चेष्टितं यच्च रत्युत्थं स्यात् परस्परम् ।
तदाहुः केऽपि शृङ्गारं [7]केचित्त्वपरथा जगुः ॥३॥

तयोः कोऽपि मनोभावो [8]विभावै-[9]र्जनितो रतिः ।
स्थायिभावः स शृंङ्गाररसस्याङ्कुर इष्यते ॥४॥

अनुभावैरसौ भावो रतिसंज्ञो विबोधितः ।
स्फीतः संचारिसंयोगात्[10] सात्त्विकैश्च प्रदीप्यते ॥५॥

वृद्धं तमाह [11]भरतश्चतुःसंयोगजं मुनिः ।
अत्रार्थे संमतिः सम्यक् शाक्यभिक्षोः[12] प्रदर्श्यते ॥६॥

रत्याख्यभावो जनितो विभावैः सम्यक् [13]प्रवृद्धः [14]क्रमशोऽनुभावैः ।
[15]स्फीतश्च संचारिभिराप्रवृद्धः शृङ्गारनामा खलु सात्त्विकैश्च ॥७॥

भगवानाह—

विभावैरनुभावैश्च भावः संचारिसात्त्विकैः ।
जनितो बोधितः[16] स्फीतो वृद्धः शृङ्गार उच्यते ॥८॥

संभोगो [17]विप्रलम्भश्च स शृङ्गारो द्विधा मतः ।
आचार्यानुमते वक्ष्ये [18]तदुदाहृतिलक्ष्मणी ॥९॥

---

[1] A. K. L. read the first foot as the second one and vice versa. The above order appears to be more logical.
[2] L. adds न् before मन्ये [3] A. यः
[4] L. तना० A. तनोव० (omits रेफ)
[5] L. तत्रापि [6] A. omits पुं०
[7] K. L. के[ऽ]पि त्वत् परथा [8] L. विवै० (omits ०भा०)
[9] A. omits रेफ [10] A. omits ०त्
[11] L. भरतः श्चतुःसंयोगज [12] K. L. omit विसर्ग [13] A. प्रबुद्धः
[14] L. writes शृङ्गारनामा after प्रवृद्धः, deletes it and then writes खलु सात्त्वतैश्च; the portion क्रमशो……०नामा is omitted.
[15] A. स्फीतेश्च [16] A. omits विसर्ग [17] K. L. तिप्र०
[18] A. omits तदुदाहृति० and gives dots in blank space.



संभोगोऽ[1]नेकभेदत्वादपरिच्छेद्य एककः ।
अन्योऽन्यालोकनाश्लेषचुम्बनादिविभेदतः ॥१०॥

अन्योऽभिलाष[2]-विरहेर्ष्या-प्रवासाख्यशापकैः[3] ।
हेतुभिः पञ्चधा भिन्नो, नायिका नायकस्तथा ॥११॥

[4]एतयोराश्रयः प्रोक्तौ[5] यथालक्षणलक्षितौ ।
प्रकाश्यते तयोर्भेदः [6]क्रमाच्छास्त्रानुसारतः ॥१२॥

[ संभोगो यथा— ]

मदनकुञ्जरकुम्भतटोपमे स्तनयुगे परितः [7]स्फुरिताङ्गुलिम् ।
सकरजक्षतवाममपि प्रिया-दयितपाणिममन्यत दक्षिणम् ॥१३॥

शून्यं वासगृहं विलोक्य शयनादुत्थाय [8]किंचिच्छनै-
र्निद्राव्याजमुपागतस्य सुचिरं निर्वर्ण्य पत्युर्मुखम् ।
विश्रब्धं परिचुम्ब्य जातपुलकामालोक्य गण्डस्थलीं
लज्जानम्रमुखी प्रियेण [9]हसता बाला चिरं चुम्बिता ॥१४॥

[ Amaru. 82 ]

तथा—

त्वं मुग्धाक्षि विनैव कञ्चुलिकया धत्से मनोहारिणीं
लक्ष्मीमित्यभिधायिनि प्रियतमे तद्वीटिकासंस्पृशि ।
शय्योपान्तनिविष्टसस्मितसखीनेत्रोत्सवानन्दितो
निर्यातः शनकैरलीकवचनोपन्यासमालीजनः ॥१५॥

[ Ibid 27 ]

[ अथ विप्रलम्भशृङ्गारः ]

यद्विप्रलम्भतो लेभे सती शैलसुता सती ।
तमेव जगतां नाथं नाथं तं शंकरं नुमः ॥१६॥

अथ प्रस्तूयते सम्यक्(ग)विप्रलम्भाह्वयो मया ।
शृङ्गारः सर्वशृङ्गारि[10]-चेतोहारि-गुणाकरः ॥१७॥

संभोगो विप्रलम्भेन विना न रतिकारकः ।
कषायिते हि वस्त्रादौ [11]भूयान् रागो यतो भवेत् ॥१८॥

---

[1] A. केन० [2] A. ०षा…………प्रवासाख्य०
[3] L. ०कैः [4] L. omits this verse.
[5] K. प्रोक्तो [6] A. K. L. क्रमात् शास्त्रानु० [7] L. स्फुरितागुलिम्
[8] A. किं छनैः, K. L. किंचिछनैः [9] A. सहसा
[10] L. ०दि [11] A. भूयाद्रागो, L. adds हि after ०रागो

[1]विप्रयोगोऽनुरागो नु यूनोरेकमनस्कयोः ।
पारतन्त्र्येण दैवाद् वा विप्र-[2]कर्षादसंगमः ॥१९॥

यथा—

संक्षिप्येरन् क्षणमिव कथं दीर्घयामास्त्रियामा:[3]
सर्वावस्थास्वहरपि कथं मन्दमन्दातपं[4] स्यात् ।
इत्थं चेतश्चटुलनयने दुर्लभप्रार्थनं[5] मे
गाढोष्माभि:[6] कृतमशरणं त्वद्वियोगव्यथाभिः ॥२०॥
[ Megha. II 47 ]

तत्र विरहश्चतुर्विधः —
पूर्वानुराग[7]-मानाख्य[8]-प्रवास-करुणात्मकः ॥२१॥

[9]तत्र [1] संगमादेव विरहः पूर्वानुरागो[10] ज्ञेयः ।
ज्ञेयः पूर्वानुरागोऽयं प्रवृद्धगुरुरागयोः ।
दम्पत्योर्दर्शनादेव तदप्राप्तौ भवेद्यथा ॥२२॥

यथा—
किं [11]चन्दनैं रचय [12]नाथ मृणालशय्यां
मामालिसंविधुत[13]-कोमलतालवृन्तम् ।
मुञ्चाग्रहं विकचपङ्कजदर्शनेषु
[14]तत्संगमः परमपाकुरुते स्मराग्निम्[15] ॥२३॥

यत्सारैरिव पङ्कजस्य घटितं यच्चन्द्रगर्भादिव
प्रोत्कीर्णं[16] यदनङ्गसायकशिखाभासेव संमार्जितम् ।
यत् संसिच्य सुधारसैरिव [17]रतेरास्थानभूमीकृतं
तद् भूयोऽपि कदा सरोरुहदृशः[18] पश्यामि तस्या मुखम् ॥२४॥

मृणालकदलीचन्द्रचन्दनाम्बुरुहादिकम् ।
यत्रानयोः [19]स्मरान्तकहृतं[20] (?) येनैव सेवितम् ॥२५॥

---

[1] A. विप्रयोगा॰ [2] L. कर्षद॰
[3] A. यमाः, K. L. omit विसर्ग [4] A. omits अनुस्वार
[5] L. ॰नांम [6] L. ॰स्मलिः
[7] A. ॰रागो [8] A. adds विसर्ग
[9] L. repeats तत्र [10] K. L. ॰रागः, omit ज्ञेयः
[11] A. च दाने [12] K. L. माथ
[13] K. L. ॰धुनु [14] A. सत्॰
[15] A. ॰ग्निः, L. स्मरामिग्निम् [16] A. omits अनुस्वार
[17] L. रात॰ [18] K. L. omit दृ॰
[19] K. L. स्मरात॰ (L. ॰तं॰) [20] A. ॰हृतायनैव



प्रेमार्द्राः[1] प्रणयस्पृशः परिचयादुद्गाढरागोदया-
स्तास्ता मुग्धदृशो[2] निसर्गमधुराश्चेष्टा भवेयुर्मयि ।
[3]यास्वन्तःकरणस्य[4] बाह्य-[5]करणव्यापाररोधी क्षणा-
दाशंसापरिकल्पितास्वपि भवत्यानन्दसान्द्रोदयः[6] ॥२६॥
[ Mālatī. V 7 ]

[ ॥इति पूर्वानुरागात्मकविप्रलम्भः॥ ]

अन्यत्र व्रजतीति का खलु कथा नाप्यस्य तादृक् सुहृद्
यो मां[7] नेच्छति नागतश्च [8]सहसा कोऽयं [9]विधिप्रक्रमः ।
इत्यल्पेतरकल्पनाकवलित[10]-स्वान्ता[11] निशान्तान्तरे[12]
बाला वृत्तविवर्तनव्यतिकरा नाप्नोति निद्रां निशि ॥२७॥
[ Quoted in K. P. IV 33 ]

[ ॥इति करुणात्मकविप्रलम्भः॥ ]

॥ एषा विरहोत्कण्ठिता ॥

सा पत्युः [13]प्रथमेऽपराधसमये सख्योपदेशं विना[14]
नो जानाति सविभ्रमाङ्गवलना[15]-वक्रोक्तिसंसूचनम् ।
[16]स्वच्छैरच्छकपोलमूलगलितैः पर्यस्तनेत्रोत्पला
[17]बाला केवलमेव रोदिति [18]लुठल्लोलोदकैरश्रुभिः ॥२८॥
[ ॥इति मानात्मकविप्रलम्भः॥ ] [ Amaru. 29 ]

प्रस्थानं वलयैः कृतं प्रियसखैरस्रैरजस्रं[19] गतं
धृत्या न क्षणमासितं व्यवसितं [20]चित्तेन गन्तुं पुरः ।
यातुं निश्चलचेतसि प्रियतमे सर्वे समं [21]प्रस्थिता
गन्तव्ये सति जीवितप्रियसुहृत्सार्थः [22]किमुत्सृज्यते ॥२९॥ [ Amaru. 35 ]

[ ॥इति प्रवासहेतुकविप्रलम्भः॥ ]

[1] K. L. omit विसर्ग [2] K. L. दृश[:] स्वभावविधुरा॰
[3] A. यो॰ [4] L. ॰करणेस्य [5] K. L. ॰विपय॰
[6] L. सांद्रादयः, quotation in K. P. IV ॰सान्द्रो लयः
[7] L. omits अनुस्वार [8] Quotation in K. P. हहहा
[9] A. विधिः, quotation in K. P. विधेः
[10] L. ॰लिता॰ [11] K. L. ॰स्वाता [12] L. ॰तातरे
[13] Quotation in K. P. IV प्रथमा॰ [14] L. omits ॰ना
[15] A. adds अनुस्वार [16] A. K. स्वस्थै॰, L. स्वस्वै॰
[17] A. omits बाला केवल॰ and gives dots in blank space.
[18] K. L. ॰ल्लोलाद्रिकै॰, quotation in K. P. ॰ल्लोलालकै॰
[19] L. ॰रास्रेरजस्र
[20] A. omits चित्तेन गन्तुं पुरः and gives dots in blank space.
[21] L. तस्थिता [22] Quotation in K. P. IV किमु त्यज्यते

त्वामालिख्य प्रणयकुपितां धातुरागैः शिलाया-
मात्मानं ते चरणपतितं यावदिच्छामि कर्तुम् ।
अस्रैस्तावन्मुहुरुपचितै[१]-र्दृष्टिरालुप्यते मे
क्रूरस्तस्मिन्नपि न सहते संगमं[२] नौ कृतान्तः ॥३०॥
[ Megha. II 44 ]

[ ॥इति शापहेतुकविप्रलम्भः॥ ]

विशेषाः कथयिष्यन्तेऽनुभावोल्लास [३]एतयोः ॥३१॥

॥ इति द्विविधोऽपि शृङ्गारः ॥१॥

॥ अथ हास्यादीनां क्रमेण लक्षणोदाहरणान्याह ॥

[ ॥अथ हास्यः॥ ]

अङ्गवेषवचःकृत्यै-[४]र्विकृतैर्जायते रसः ।
हासाख्यस्थायिभावेन हास्यः[५] पात्रत्रये यथा ॥३२॥

[यथा—]

आकुञ्च्य पाणिमशुचिं मम मूर्ध्नि वेश्या
[६]मन्त्राम्भसां प्रतिपदं पृषतैः पवित्रे ।
तारस्वरं[७] [८]प्रथित-[९]थूत्कमदात् प्रहारं
हा! हा! हतोऽहमिति [१०]रोदिति विष्णुशर्मा ॥३३॥
[ Quoted in K. P. IV 37 ] ॥ इति हास्यः[११] ॥२॥

॥ अथ करुणः ॥

शोकात्मा करुणो ज्ञेयः प्रियमृत्युधनक्षयात् ।
दुःखभाजनमत्र स्यान्नायको दैवतो यथा ॥३४॥

[यथा—]

हा मातस्त्वरिताऽसि कुत्र किमिदं हा [१२]देवताः क्वाशिषो
धिक् प्राणान् पतितोऽशनिर्हुतवहस्तेऽङ्गेषु[१३] दग्धे दृशौ ।
इत्थं घर्घरमध्यरुद्धकरुणाः[१४] [१५]पौराङ्गनानां गिर-
श्चित्रस्थानपि[१६] रोदयन्ति शतधा कुर्वन्ति भित्तीरपि ॥३५॥
[ Quoted in K. P. IV 38 ] ॥ इति करुणः ॥३॥

---

[१] L. ०ते० [२] K. L. ०मे [३] L. एषयोः
[४] A. omits रेफ [५] K. L. हास्यपात्र यथा
[६] L. मत्रांभसा (A. K. also ०सा०), quotation in K. P. ०सां
[७] Quotation in K. P. ०स्वनं [८] A. प्रहित०, K. L. विहित०
[९] A. फूत्क०, K. L. पूत्क० [१०] K. adds ाम before रोदिति
[११] K. L. omit विसर्ग [१२] K. L. दैव०
[१३] A. ०वहः स्वांगेषु, L. स्तेगैषु [१४] A. ०करुणः
[१५] L. पोरां० [१६] L. ०नमपि



॥ अथ रौद्रः ॥

[१]रौद्रः क्रोधात्मको[२] ज्ञेयः प्रतिपक्षममर्षतः ।
नायकोऽत्र भवत्युग्रो रक्षःप्रायोऽत्यमर्षणः ॥३६॥

[यथा—]

कृतमनुमतं दृष्टं वा यैरिदं गुरुपातकं
मनुजपशुभिर्निर्मर्यादैर्भवद्भिरुदायुधैः ।
नरकरिपुणा सार्धं तेषां सभीमकिरीटिना-[३]
[४]मयमहम-[५]सृङ्मेदोमांसैः करोमि दिशां बलिम् ॥३७॥
[ Veṇī. III 24 ] ॥ इति रौद्रः ॥४॥

॥ अथ वीरः ॥

[६]उत्साहस्थायी(यि)वीरः स्याद् दयादानाजिपूर्वकः ।
गाम्भीर्यादिगुणैर्युक्तस्त्रिविधस्तत्र नायकः[७] ॥३८॥

यथा—

अयि विहङ्गवरात्म[८]-कपोतकं विसृज धेहि धृतिं मम मेदसा ।
शिविरहं भवता विदितो न किं सकलसत्त्वसमुद्धरणक्षमः ॥३९॥
॥ इति दयावीरः ॥

मुषितोऽसि हरे नूनं भुवनत्रयमात्रलब्धितोषेण ।
बलिरर्थितदोऽस्मि यतो न याचितः किं ततोऽभ्यधिकम् ॥४०॥
॥ इति दानवीरः ॥

क्षुद्राः सन्त्रासमेते विजहतहरयः क्षुण्णशक्रेभकुम्भा
युष्मद्देहेषु लज्जां[९] [१०]दधति परममी सायका निष्पतन्तः ।
सौमित्रे तिष्ठ पात्रं त्वमपि नहि रुषां नन्वहं मेघनादः
किञ्चित्संरम्भलीलानियमितजलधिं[११] राममन्वेषयामि ॥४१॥
[ Hanu. XII 2 ] ॥ इत्याजिवीरः ॥
॥ इति वीरः[१२] ॥५॥

॥ अथ भयानकः ॥

भयस्थायिभवो भावो जायतेऽत्र भयानकः ।
स्त्रीनीचबाल-[१३]प्रकृतिर्विकृत[१४]-श्रवणादिभिः ॥४२॥

---

[१] K. L. द्रौद्रः [२] L. काज्ञेयः [३] L. omits किरीटिना०
[४] A. ०महमयमसक्रन्मेदो० [५] K. L. ०सृग्० [६] L. उच्चाह०
[७] K. L. omit विसर्ग [८] K. L. ०वरात्तं०
[९] A. omits अनुस्वार [१०] L. दति (omits ०ध०)
[११] A. ०जलधीः [१२] K. L. omit इति वीरः
[१३] K. L. प्रकृतेविकृतः [१४] A. ०विकृतिः शरणादिभिः

[यथा - ]

ग्रीवाभङ्गाभिरामं मुहुरनुपतति[१] स्यन्दने बद्धदृष्टिः
पश्चार्धेन[२] प्रविष्टः शरपतनभयाद् भूयसा पूर्वकायम् ।
दर्भैरर्धावलीढै[:] श्रमविवृतमुख-[३]भ्रंशिभिः कीर्णवर्त्मा
पश्योदग्र-[४]प्लुतत्वाद् वियति बहुतरं स्तोकमुर्व्यां प्रयाति ॥४३॥

[ Śākuntalam I. 7 ] ॥ इति भयानकः ॥६॥

॥ अथ बीभत्सः ॥

जुगुप्सा[५]-स्थायि[६]-बीभत्सोऽहृद्यवस्तुप्रदर्शनात्[७] ।
[८]पूत्यादेर्निन्द्यवस्तूनां [९]दर्शनाच्छ्रवणादपि ॥४४॥

यथा—

उत्कृत्योत्कृत्य कृत्तिं प्रथममथ[१०] [११]पृथूत्सेधभूयांसि मांसा-
न्यंसस्फिक्पृष्ठ-[१२]जङ्घाद्यवयवसुलभान्युग्रपूतीनि जग्ध्वा ।
[१३]आत्तस्नाव्व [ा]न्त्रनेत्रात् प्रकटितदशनः [१४]प्रेतरङ्कः करङ्का-
दङ्कस्थादस्थिसंस्थं [१५]स्थपुटगतमपि क्रव्यमव्यग्रमत्ति ॥४५॥

[ Mālatī. V 15 ] ॥ इति बीभत्सः ॥७॥

॥ अथाद्भुतः ॥

[१६]विस्मयात्माऽद्भुतो मायेन्द्रजालादिविलोकनैः ॥४६॥

यथा—

सत्यं हृता त्वया हंसवनितानामियं गतिः ।
भ्रमन्त्येतास्तथा[१७]-ऽप्येतदिन्द्रजालं तव प्रिये ॥४७॥

॥ [१८]इत्यद्भुतः ॥८॥

---

१ K. L. ०पतितः  २ L. ०र्धंन
३ A. K. L. ०ध्वंसिभि०  ४ A. ०प्लुतित्वा०
५ K. L. add अनुस्वार  ६ K. L. ०यी
७ K. L. ०प्रबन्धनात्
८ K. L. पूत्याद्यै० (L. ०निद्य०)
९ A. K. L. दर्शनात् श्रवणाद०  १० A. प्रथम·········शोक०
११ K. L. पृथक् शोक०
१२ Original ०पीठा०, quotation in K. P. IV ०पिण्ड्या०
१३ Quotation in K. P. IV आर्तः पर्यस्तनेत्रः
१४ A. omits प्रेतरङ्कः and gives dots in blank space.
१५ L. स्थंपुट०  १६ K. L. विस्मितात्मा०
१७ A. ०स्तयो०, K. L. ०स्तवा०  १८ K. L. इति अद्भुतः



॥ अथ शान्तः ॥

[१]स(श)मस्थायी [२]भवेच्छान्तः सर्वत्र समदर्शनः ।
तत्त्वज्ञानोद्गतोऽयो[३] स[४] तमोरागपरिक्षयात् ॥४८॥

यथा—

[५]धनमहरहर्दत्तं स्वीयं यथार्थितमर्थिने
कृतमरिकुलं नारीशेषं [६]स्वखड्गविजृम्भितैः ।
प्रणयिनि जने रागोद्रिक्ते नतिर्विहिता चिरं
[७]किमपरमितः[८] कर्तव्यं मे [९]प्रशान्तधियः परम् ॥४९॥

यथा च—

अहौ वा हारे[१०] वा बलवति रिपौ वा सुहृदि वा
मणौ वा लोष्टे वा कुसुमशयने वा दृषदि वा ।
तृणे वा स्त्रैणे वा मम समदृशो [११]यान्तु दिवसाः
क्वचित् पुण्येऽरण्ये शिव शिव शिवेतिप्रलपतः ॥५०॥

[ Vairāgya., one of the extra verses ] [ ॥इति शान्तः॥ ]

प्रत्यक्षभूमित्रितयोपारूढत्वेन नर्तकः ।
लोकस्यैव स्वभावस्य वासनारूपभेदतः ॥५१॥

स्तम्भादिभिः [१२]प्रयुज्येत [१३]एवं शान्ते रसात्मता ।
एतेषामनुभावास्तु ज्ञेया[१४] राजोपदेशतः ॥५२॥

॥ इति नवरसाः ॥

॥ अथैषां स्थायिभावाः । तत्र स्थायिनो लक्षणं यथा ॥

सजातीयविजातीयैरतिरस्कृतमूर्तिमान् ।
यावद्रसं वर्तमानः[१५] स्थायी भाव उदाहृतः ॥५३॥

सजातीयैर्ना[१६]-यिकान्तरदर्शनादिभिर्विजातीयैः [१७]स्वातिरिक्तैः[१८] ॥

---

१ L. समयी (omits ०स्था०)
२ A. भवे छांतः, K. L. भवेत् शान्तः (K. omits विसर्ग)
३ A. ०ज्ञानागते द्वो, K. L. ०ज्ञानाद् गते छोः (तत्त्वज्ञानाद् गतेच्छः can be a possible reading).  ४ K. L. सस्तमो०
५ L. omits ध०  ६ A. स्वखड्ज०, K. L. स्वष(ष?)ड्ग०
७ K. L. omit किम०  ८ A. ०मितष्क०  ९ L. प्रशांते०
१० L. हारो  ११ Quotation in K. P. IV यान्ति
१२ K. L. प्रयोज्योत  १३ K. L. एव शान्तो  १४ L. ज्ञेयो
१५ K. L. omit विसर्ग
१६ A. ०नायिकान्तरदर्शिभिः विजातीयैः, K. L. ०र्नायकांतर०
१७ K. L. स्था०  १८ L. ०रिक्तैः

ते च यथा —

रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयं तथा ।
जुगुप्साविस्मयशमाः[१] स्थायिभावाः प्रकीर्तिताः ॥५४॥

एतेषां लक्षणानि—

आस्था बन्धात्मिकाऽन्योऽन्यं रतिरित्यभिधीयते ।
हासश्चित्तविकासः[२] स्याद् वैधुर्यं शोक उच्यते ॥५५॥

तैक्ष्ण्य[३]-प्रबन्धः क्रोधः[४] स्यात्, स्थेयान् संरम्भ उच्यते ।
उत्साहो-ऽथ भयं नाम वैक्लव्यं परिकीर्तितम् ॥५६॥

संकोचस्तु जुगुप्सा स्याद्, विस्तारो विस्मयस्तथा ।
सम्यक्(ग्)ज्ञानभवा शान्तिः [५]शम इत्यभिधीयते ॥५७॥

रत्यादयः[६] स्थायिभावाः शृङ्गारादेर्यथाक्रमम् ।
शृङ्गारस्य रतिः स्थायी सेच्छाविशेष [७]उच्यते ॥५८॥

इच्छा तु प्रार्थनारूपा[८]-ऽनुपलब्धा सती तु सा ।
भावः प्रोक्तः स च द्वेधा, तयोराद्यः प्रकीर्तितः ॥
संप्रयोगस्य[९] विषयः[१०], परस्तदितरस्य च ॥५९॥

संप्रयोगस्य [११]विषयो रतिरित्यभिधीयते ।
तयेतरस्य विषयः प्रीतिरित्युच्यते बुधैः ॥६०॥

यदानन्दात्मकत्वं तु रतेः कैश्चित् प्रकीर्तितम् ।
तच्चिन्त्यं, [१२]विप्रयोगादावनानन्दस्य दर्शनात् ॥६१॥

---

[१] A. ०समाः, L. शशमाः
[२] K. L. ०विकारः
[३] K. L. add विसर्ग
[४] A. omits विसर्ग
[५] A. सम
[६] A. L. omit विसर्ग
[७] K. L. इष्यते
[८] K. ०रूपं नुप०
[९] A. संप्रयोगो [ऽ]स्य
[१०] K. L. omit विसर्ग
[११] K. repeats after विष०, ०य परस्तदितरस्य च from the preceding line, but cancels the repeated portion with square brackets at both the ends and takes up the link with ०यो रति० etc.; L. links up विष० with यदानन्दात्मकत्वं (first foot of verse 61) and omits the second, third and fourth feet of verse 60.
[१२] A. विप्रयोगादौ नवानन्दस्य, K. L. विप्रयोगादावनन्दस्य



तत्र रतिर्यथा —

जगति [१]जयिनस्ते ते भावा नवेन्दुकलादयः
प्रकृतिमधुराः[२] [३]सन्त्येवान्ये मनो मदयन्ति ये ।
मम तु यदियं याता लोके विलोचनचन्द्रिका
नयनविषयं जन्मन्येकः स एव महोत्सवः ॥६२॥

[ Mālatī. I. 39] ॥ इति रतिः ॥१॥

[४]विकृतदर्शनादिजन्मा मनोविकारो हासः[५] ॥६३॥

यथा—

गोभिः [६]क्रीडितवान् कृष्ण इति गोतुल्यबुद्धिषु ।
स्निह्यत्यद्यापि सा लक्ष्मीरहो देवी पतिव्रता ॥६४॥

[ Subhāṣita. 62.4 ] ॥ इति हासः ॥२॥

परदुःखप्रहरणेच्छया तस्यात्मीयत्वापादनम् ।
इष्टवियोगादिनाऽऽत्मनि दुःखोद्रेको वा शोकः ॥६५॥

यथा—

हृदयान्नापयातोऽसि[७] दिक्षु सर्वासु दृश्यसे[८] ।
वत्स ! राम ! गतोऽसीति [९]संतापादनुभूयते ॥६६॥

॥ इति शोकः ॥३॥

परविकारादिभिः प्रज्वलनं क्रोधः ॥६७॥

यथा—

[१०]चञ्चद्भुजभ्रमितचण्डगदाभिघात-
संचूर्णितोरुयुगलस्य सुयोधनस्य ।
स्त्यानावनद्ध-[११]घनशोणितशोणपाणि-
[१२]उत्तंसयिष्यति कचांस्तव देवि! भीमः ॥६८॥

[ Veṇī. I 21 ] ॥ इति क्रोधः ॥४॥

लोकोत्तरकार्येषु स्थेयान् प्रयत्न उत्साहः ॥६९॥

---

[१] L. जयिनास्तते
[२] A. omits विसर्ग
[३] L. संत्यवान्ये
[४] A. विकृति०
[५] L. omits ०सः
[६] L. क्रडित०
[७] A. ०याताऽसि
[८] A. ०ते
[९] A. संतापोदेव भूयते, K. L. ०भूयसे
[१०] A. omits चंचद्भुजभ्रमि० and gives dots in blank space.
[११] L. ०वन०
[१२] A. K. L. ०रुत्तंभ०

यथा—

अजित्वा सार्णवामुर्वीमनुद्धृत्य जगच्छुचम् ।
अदत्वा प्राणमर्थिभ्यः[1] कथं जीवन्ति जन्तवः ॥७०॥

॥ इत्युत्साहः ॥५॥

अनिष्टदर्शनं भीति-[2]ररिसंदर्शनादिभिः[3] ॥७१॥

यथा—

मन्त्रान् मृत्युजितो जपद्भिरसकृद् ध्यायद्भिरिष्टान्[4] सुरान्
शुष्यत्तालुभिराकुलीकृतपदै-[5]र्निर्वाग्भिरुत्कम्पिभिः ।
अध्वर्यैरिह जीवितेशमहिषव्या[6]-धूम्रधूमाविला
लङ्घ्यन्ते करिमांसघस्मररणत्कौलेयकाः पल्लयः ॥७२॥

॥ इति भयम् ॥६॥

जुगुप्सा गर्हणार्थानां दोषसंदर्शनादिभिः ॥७३॥

यथा—

हासोऽस्थिसंदर्शनमक्षियुग्न-
मत्युज्ज्वलं तत् कललं वसायाः[7] ।
स्तनौ च पीनौ[8] पिशितस्य पिण्डौ
स्थानं रतेः [9]किन्नरयोनियोषित् ॥७४॥

॥ इति जुगुप्सा[10] ॥७॥

विस्मयश्चित्तविस्तारः पूर्वादृष्टविलोकनात् ॥७५॥

यथा—

दोर्दण्डाञ्चितचन्द्रशेखर-[11]धनु-[12]र्दण्डानुभङ्गोद्यत-
ष्टङ्कारध्वनिरार्यबालचरितप्रस्तावनाडिण्डिमः[13] ।
[14]दिक्पर्याप्तकपालसंपुटमितब्रह्माण्डभाण्डोदर-
भ्राम्यत्पिण्डितचण्डिका कथमहो नाद्यापि विश्राम्यति ॥७६॥

[ Sūkti. 95. 3 ] ॥ इति विस्मयः ॥८॥

---

[1] K. omits विसर्ग, L. ०भ्या
[2] L. ०रभि०
[3] A. दिति
[4] K. L. ०रिष्यन्
[5] A. ०र्निर्वाभि०
[6] L. ०य०
[7] A. वसाना
[8] L. पीनै
[9] K. L. किनिरयोन०
[10] L. जुप्सा (omits ०गु०)
[11] L. omits ०ध०
[12] K. L. ०दंडा च
[13] A. डींडमः
[14] K. L. धिक्, original द्राक्पर्यस्त०



[1]शमो वैराग्याविना निर्विकारचित्तत्वम् ॥७७॥

यथा—

[2]अश्नीमहि वयं भिक्षामाशावासो [3]वसीमहि ।
[4]शयीमहि महीपृष्ठे कुर्वीमहि किमीश्वरैः ॥७८॥

[ Vairāgya. 56 ] ॥ इति शमः ॥९॥

॥ इति [स्थायि-]भावाः ॥

अनौचित्यादृते नान्यद्रसभङ्गस्य कारणम्[5] ।
[6]तदाभासास्ततस्त्याज्या यतो नौचित्यदीपकाः ॥७९॥

[7]अत्र रसाभासो यथा—

स्तुमः[8] कं वामाक्षि क्षणमपि[9] विना यं न रमसे
विलेभे कः प्राणान् [10]रणमखमुखे यं मृगयसे ।
सुलग्ने को जातः शशिमुखि! यमालिङ्गसि बलात्
तपःश्रीः[11] कस्यैषा मदननगरि ध्यायसि तु यम् ॥८०॥

[ Quoted in K. P. IV 48 ]

अत्र स्तुमः कमित्यादिकमनेककामुकविषयमभिलाषमस्या[12] द्योतयदनौचित्यं प्रकटयति ॥

॥ इति रसाभासः ॥

अथ भावाभासो यथा—

[13]राकासुधाकरमुखी तरलायताक्षी
सा स्मेरयौवनतरङ्गितविभ्रमाङ्गी[14] ।
तत् किं करोमि विदधे कथमत्र मैत्रीं[15]
[16]तत्स्वीकृतिव्यतिकरे क इवाभ्युपायः ॥८१॥

[ Quoted in K. P. IV 49 ]

अत्राभिधेयगता चिन्ता । प्रत्युत अनौचित्यमेव द्योतयति । एवमन्येषां रसानां [17]भावानामपि आभासा उदाहरणीयाः ॥

[ ॥इति भावाभासः॥ ]

अथोदाह्रियते सम्यक्(ग्) भावशान्त्यादिकं स्फुटम् ॥८२॥

---

[1] A. समो
[2] A. आशी०
[3] A. वही०
[4] L. शायी०
[5] cf. Dhvanyā. III
[6] K. L. तदाभ्या०
[7] K. L. तत्र
[8] K. L. omit विसर्ग
[9] A. K. L. क्षणमिव
[10] L. रणमुख०
[11] K. L. omit विसर्ग
[12] L. omits ०म० (०लाषस्या)
[13] A. कारा०
[14] A. K. L. ०विभ्रमास्या
[15] L. omits अनुस्वार
[16] A. ते स्वीकृ०
[17] K. L. भावनामपि

**तत्र भावशान्तिर्यथा—**

तस्याः सान्द्रविलेपनस्तनतट[१]-प्रश्लेषमुद्राङ्कितं
किं वक्षश्चरणानतिव्यतिकरव्याजेन गोपाय्यते ।
इत्युक्ते [२]क्व तदित्युदीर्य सहसा तत्संप्रमाष्टुं मया
साऽऽश्लिष्टा रभसेन तत्सुखवशा-[३]त्तन्व्याऽपि तद्विस्मृतम् ॥८३॥

[ Amaru. 26 ]

**अत्र कोपाख्यभावस्य शान्तिः ॥**

**[ ॥ इति भावशान्तिः॥ ]**

**अथ भावोदयो यथा—**

एकस्मिन्(न्)शयने विपक्षरमणीनामग्रहे मुग्धया
सद्यः कोपपराङ्मुखग्लपितया चाटूनि कुर्वन्नपि ।
आवेगादवधीरितः प्रियतमस्तूष्णीं स्थितस्तत्क्षणं[४]
मा [५]भूत्सुप्त इवेत्यमन्दवलित[६]-ग्रीवं पुनर्वीक्षितः ॥८४॥

[ Amaru. 22 ]

**अत्रौत्सुक्यभावस्योदयः[७] ॥**

**[ ॥इति भावोदयः॥ ]**

**अथ भावसन्धिर्यथा—**

उत्सिक्तस्य तपःपराक्रमनिधेरभ्यागमादेकतः
सत्सङ्गप्रियता च वीररभसोत्फालश्च[८] मां कर्षतः ।
वैदेहीपरिरम्भ एष च मुहुश्चैतन्यमामीलय-
न्नानन्दी हरिचन्दने[९]न्दुशिशिरस्निग्धो रुणद्ध्यन्यतः ॥८५॥

[ Mahāvīra. II 22]

**अत्र [१०]जामदग्न्यसमागमादावेगः । जानकीपरिरम्भणाद्[११] हर्षः । एवं भावयोः सन्धिः ।**

**[ ॥ इति भावसन्धिः॥ ]**

---

[१] Original स्तनयुग०    [२] K. L. omit क्व त०
[3] A. K. L. ०वशा तस्याश्च, quotation in K.P. IV वशात्तन्व्या च, original वशात्तस्याश्च
[४] L. स्थितस्तत्सुप्त
[५] Original भून्म्लान
[६] K. L. ०वलितः
[७] K. L. ०भावस्य विषयः
[८] Original ०रभंसोन्मादश्च
[९] K. L. ०नंदि०
[१०] K. L. परशुराम०
[११] A. ०णाव, K. L. ०णाय



**अथ भावशबलता यथा—**

क्वाकार्यं शशलक्ष्मणः क्व च कुलं भूयोऽपि दृश्येत सा
दोषाणां प्रशमाय मे श्रुतमहो कोपेऽपि कान्तं मुखम् ।
किं[१] वक्ष्यन्त्यपकल्मषाः[२] कृतधियः स्वप्नेऽपि सा दुर्लभा
चेतः स्वास्थ्यमुपैहि कः खलु युवा धन्योऽधरं धास्यति ॥८६॥

[ Ascribed to Vikramo. IV 34 ]

**अत्र [३]वितर्कौत्सुक्य-मति-स्मरण-शङ्का-[४]दैन्यधृतिचिन्तानां भावानां शबलता इत्यादि [५]सर्वत्र विचार्य योजनीयम् ॥**

**[ ॥इति भावशबलता॥ ]**

**सत्यं सन्ति जगत्त्रयीपरिसरे ते ते [६]सुराधीश्वरा
येषां संस्मृतिमात्रमत्र फलदं स्वर्गापवर्गादिनः ।
अस्माकं तु यदादिचित्तफलके संकल्पकल्पद्रुमं
[७]कामाक्षाचरणारविन्दमुदितं तेनैव [८]सर्वाप्तयः ॥८७॥**

**अत्र [९]कामाक्षाचरणारविन्दमेवाहं चतुर्वर्गप्राप्तेरप्यधिकं मन्ये इति [१०]परमेश्वरीविषये रतिर्भावः[११] । [१२]एवं गुर्वादिविषये [१३]प्राह्या ॥**

**[१४]इति श्रीजगदीशवनदेवनिजगणेन जगदीश्वरीकामेश्वरीचरणकिङ्करेण श्रीब्रह्माद्रिविभुना अध्युष्टतमनरेश्वरेण भीष्मपुरजयानीतानेकराजकन्यारत्नेन श्रीपुरग्रहणसंवर्धितयशोभरेण वाटिकाचलग्रहणजनितकीर्तिपु(पू)रपराजिताचलनायकेन संगमनीरदुर्गोद्धरणोद्धृतसकलमण्डला-**

---

[१] L. omits अनुस्वार    [२] A. omits विसर्ग, L. ०पः कल्मषाः
[३] A. L. वितर्क्यौ०, K. वितर्क्यौं०    [४] K. ०दैन्य०, L. ०देन्य०
[५] A. सर्व    [६] A. सुधरा०
[७] K. L. कुम्भस्वामि०    [८] A. सर्वप्रियः, L. सप्तवंवियः (?)
[९] L. श्रीकुम्भस्वामिपदारविन्दमेवाहं    [१०] K. L. परमेश्वर०
[११] K. L. add ॥ श्री[:] ॥
[१२] L. begins folio 594 (15) with एवं etc. in changed handwriting. The full colophon and three verses of the next परीक्षण are found in the changed handwriting.
[१३] K. L. ०प्यूह्या
[१४] K. reads the colophon as follows: –

इति श्रीराजाधिराजश्रीकुम्भकर्णविरचिते संगीतराजे षोडशसाहस्र्यां संगीतमीमांसायां [रस-]रत्नकोशे रसोल्लासे विभासादिपरीक्षणं (?) नाम चतुर्थं परीक्षणम् ॥ श्री[:] ॥

इति श्रीसरस्वतीरससमुद्भूतकैरवोद्याननायकेन अभिनवभरताचार्येण मालवाम्भोधिमाथ-मन्थमहीधरेण योगिनीप्रसादासादितयोगिनीपुरेण मण्डलदुर्गोद्धरणोद्धृतसकलमण्डलाधीश्वरेण

धीश्वरेण मदनपुरविध्वंसनबन्दीकृतयवनीनिचयेन महिषमेरुजयाजेयत्रिभवेन शाकम्भरीरमणपरिशीलनपरिप्राप्तशाकम्भरीपरितोषितशाकम्भरीप्रमुखशक्तित्रयेण अष्टादशगिरिविजयविख्यातवीर्यगर्वेण महदम्बमातृकापुरोद्धूलनर्धषितमहोरगपुरेण श्रीवनदेवस्वामिप्रासाद–(L. ०प्रसाद०) रचनापरपरमेश्वरेण श्री (L. omits श्री०)त्र्यम्बकेश्वरसन्निधिनिर्मितकीर्तिस्तम्भोन्नतजयस्तम्भेन श्रीब्रह्मगिरिभौमस्वर्गतायथार्थीकरणरचितचारुपथेन श्रीकामाक्षागिरिनवीननिर्मित(ति) पराजितसुमेरुणा श्रीमहिषाचलोपरि-श्रीहरिशरणरचिताचलदुर्गेण अभिनवभरताचार्येण वीणावादनप्रवीणेन यवनकुलाकालकालरात्रिरूपेण त्रिसन्ध्यक्षेत्रसमुद्रसंभवरोहिणीरमणेन परमभागवतेन महाराजाधिराजमहाराणाश्रीमृगाङ्कुतामराजेन्द्रनन्दनेन श्री(L. omits श्री०)महाराज्ञी(L. adds श्री०)सौभाग्यवतीजसमाम्बिकाहृदयनन्दनेन सकलसीमन्तिनीशिरोमणिनिकुम्भराजन्यवंशावतंस (L. adds श्री०)महाराज्ञीश्रीकर्मवतीलखुमादेवीहृदयाधिनाथेन (L. adds इति श्री०) महाराजाधिराज(L. adds श्री०)कालसेनमहीमहेन्द्रेण (L. omits महीमहेन्द्रेण) विरचिते संगीतराजे षोडशसाहस्र्यां संगीतमीमांसायां रसरत्नकोशे रसलक्षणोल्लासे रसलक्षणं चतुर्थं समाप्तम् । उलासश्च समाप्तः प्रथ[मः] ॥

---

अजयजयाजेयविभवेन यवनकुलाकालकालरात्रिरूपेण शाकम्भरीरमणपरिशीलनपरिप्राप्तशाकम्भरीतोषित-शाकम्भरीप्रमुखशक्तित्रयेण नागपुरोद्धूलनर्धषितनागपुरेण अर्बुदाचलग्रहणसंदर्शिताचलाद्भुतप्रतापेन गुर्जरा[धीश]-धीरत्वोन्मूलनप्रचण्डपवनेन श्रीमत्कुम्भलमेरुनवीननिर्मितसुमेरुणा श्रीचित्रकूटभौमस्वर्गयथार्थीकृतरचितचारुतरपथेन श्रीमेदपाटसमुद्रसंभवरोहिणीरमणेन अरिराजमत्तमातङ्गपञ्चाननेन प्ररूढपत्रयवनदवदहनद[ा]वानलेन प्रत्यर्थिपृथ्वीपतितिमिरततिनिराकरणप्रौढप्रतापमार्तण्डेन वैरिवनितावैधव्यदीक्षादानदक्षोद्दण्डकोदण्डदण्डमण्डिताखण्डभुजादण्डेन भूमण्डलाखण्डलेन श्रीचित्रकूटविभुना अध्युष्टतमनरेण(नरेन्द्रेण) गजनरतुरगाधीशराजत्रितयतोडरमल्लेन वेदमार्गस्थापनचतुराननेन याचककल्पद्रुमेण वसुन्धरोद्धरणादिवराहेण परमभागवतेन जगदीश्वरीचरणकिङ्करेण भवानीपतिप्रसादाप्तापसादवरप्रसादेन राजगुर्वादिविरुदावलीविराजमानेन राजाधिराजमहाराणाश्रीमोकलनन्दनेन राजाधिराजश्रीकुम्भकर्णमहीमहेन्द्रेण विरचित(ते) [संगीतराजे षोडशसाहस्र्यां संगीतमीमांसायां रसरत्नकोशे रसलक्षणोल्लासे रसलक्षणं चतुर्थं परीक्षणं समाप्तम्], उल्लासः पूर्णः (This is redundant); उल्लासश्च समाप्तिं समगादिति विततमतीनामभिमतसिद्धिरस्तु ॥ श्री [:] ॥

# द्वितीयो विभावोल्लासः

## तत्र नायकभेदवर्णनं नाम प्रथमं परीक्षणम्

यस्य स्वरूपमालम्ब्य सगुणं योगिनो हृदि ।
विभावयन्ति तं वन्दे [1]ज्ञानोद्दीपनमीश्वरम् ॥१॥

आलम्बनविभावास्तु कथ्यन्तेऽनुक्रमादथ ।
तत्रादौ [2]नायकोऽन्यत्तु यतस्तदनुगं स्मृतम् ॥२॥

तत्रादौ तद्गुणाः[3] सर्वे कथ्यन्ते पूर्वशास्त्रतः ।
महाकुलीनतौदार्यं महाभाग्यं [4]कृतज्ञता ॥३॥

यौवनं च [5]विदग्धत्वमुत्साहो दार्ढ्यमेव च ।
तेजस्विता दक्षता च धार्मिकत्वं च तद्गुणाः ॥४॥

महाकुलीनता यथा—

तदन्वये शुद्धमतिः[6] प्रसूतः शुद्धिमत्तरः ।
दिलीप इति राजेन्द्र[7] इन्दुः क्षीरनिधाविव ॥५॥

[ Raghu. I. 12 ]

[8]औदार्यं त्यागः । स च यथा—

कर्णस्त्वचं शिविर्मांसं जीवं जीमूतवाहनः ।
ददौ दधीचिरस्थीनि किमदेयं महात्मनाम् ॥६॥

महाभाग्यं यथा—

स वेलावप्रवलयां परिखीकृतसागराम् ।
अनन्यशासनामुर्वीं शशासैकपुरीमिव ॥७॥

[ Raghu. I. 30 ]

कृतज्ञता यथा—

[9]निष्कण्टकां विधायापि [10]किष्किन्धानगरस्थितिम्[11] ।
लज्जते रामचन्द्रोऽसौ[12] सुग्रीवमुखवीक्षणे ॥८॥

---

[1] A. ज्ञनो०, K. ज्ञाना०
[2] L. adds नायके before नायको०
[3] K. omits विसर्ग
[4] L. resumes the normal handwriting with कृतज्ञता which comes in the beginning of the next folio (595; 16).
[5] K. L. विदत्वत्व०
[6] Original शुद्धिमति
[7] Original राजेन्दुरिन्दुः
[8] L. अदार्यं
[9] K. L. निःकं०
[10] K. L. किष्किध्या०
[11] L. ०स्थिति
[12] A. ०चंद्रोपि

धीश्वरेण मदनपुरविध्वंसनबन्दीकृतयवनीनिचयेन महिषमेरुजयाजेयत्रिभवेन शाकम्भरीरमणपरिशीलनपरिप्राप्तशाकम्भरीपरितोषितशाकम्भरीप्रमुखशक्तित्रयेण अष्टादशगिरिविजयविख्यातवीर्यगर्वेण महदम्बमातृकापुरोद्धूलनधर्षितमहोरगपुरेण श्रीवनदेवस्वामिप्रासाद-(L. ०प्रसाद०) रचनापरपरमेश्वरेण श्री (L. omits श्री०)त्र्यम्बकेश्वरसन्निधिनिर्मितकीर्तिस्तम्भोन्नतजयस्तम्भेन श्रीब्रह्मगिरिभौमस्वर्गतायथार्थीकरणरचितचारुपथेन श्रीकामाक्षागिरिनवीननिर्मित(ति) पराजितसुमेरुणा श्रीमहिषाचलोपरि-श्रीहरिशरणरचिताचलदुर्गेण अभिनवभरताचार्येण वीणावादनप्रवीणेन यवनकुलाकालकालरात्रिरूपेण त्रिसन्ध्यक्षेत्रसमुद्रसंभवरोहिणीरमणेन परमभागवतेन महाराजाधिराजमहाराणाश्रीमृगाङ्कतामरराजेन्द्रनन्दनेन श्री(L. omits श्री०)महाराज्ञी(L. adds श्री०)सौभाग्यवतीजसमाम्बिकाहृदयनन्दनेन सकलसीमन्तिनीशिरोमणिनिकुम्भराजन्यवंशावतंस (L. adds श्री०)महाराज्ञीश्रीकर्मवतीलखुमादेवीहृदयाधिनाथेन (L. adds इति श्री०) महाराजाधिराज(L. adds श्री०)कालसेनमहीमहेन्द्रेण (L. omits महीमहेन्द्रेण) विरचिते संगीतराजे षोडशसाहस्र्यां संगीतमीमांसायां रसरत्नकोशे रसलक्षणोल्लासे रसलक्षणं चतुर्थं समाप्तम् । उलासश्च समाप्तः प्रथ[मः] ॥

---

अजयजयाजेयविभवेन यवनकुलाकालकालरात्रिरूपेण शाकम्भरीरमणपरिशीलनपरिप्राप्तशाकम्भरीतोषित-शाकम्भरीप्रमुखशक्तित्रयेण नागपुरोद्धूलनधर्षितनागपुरेण अर्बुदाचलग्रहणसंदर्शिताचलाद्भुतप्रतापेन गुर्जरा[धीश]-धीरत्वोन्मूलनप्रचण्डपवनेन श्रीमत्कुम्भलमेरुनवीननिर्मितसुमेरुणा श्रीचित्रकूटभौमस्वर्गयथार्थीकृतरचितचारुतरपथेन श्रीमेदपाटसमुद्रसंभवरोहिणीरमणेन अरिराजमत्तमातङ्गपञ्चाननेन प्ररूढपत्रयवनदवदहनद[ा]वानलेन प्रत्यर्थिपृथ्वीपतितिमिरततिनिराकरणप्रौढप्रतापमार्तण्डेन वैरिवनितावैधव्यदीक्षादानदक्षोद्दण्डकोदण्डदण्डमण्डिताखण्डभुजादण्डेन भूमण्डलाखण्डलेन श्रीचित्रकूटविभुना अध्युष्टतमनरेण(नरेन्द्रेण) गजनरतुरगाधीशराजत्रितयतोडरमल्लेन वेदमार्गस्थापनचतुराननेन याचककल्पद्रुमेण वसुन्धरोद्धरणादिवराहेण परमभागवतेन जगदीश्वरीचरणकिङ्करेण भवानीपतिप्रसादाप्तापसादवरप्रसादेन राजगुर्वादिविरुदावलीविराजमानेन राजाधिराजमहाराणाश्रीमोकलनन्दनेन राजाधिराजश्रीकुम्भकर्णमहीमहेन्द्रेण विरचित(ते) [संगीतराजे षोडशसाहस्र्यां संगीतमीमांसायां रसरत्नकोशे रसलक्षणोल्लासे रसलक्षणं चतुर्थं परीक्षणं समाप्तम्], उल्लासः पूर्णः (This is redundant); उल्लासश्च समाप्तिं समगादिति विततमतीनामभिमतसिद्धिरस्तु ॥ श्री [:] ॥

# द्वितीयो विभावोल्लासः

## तत्र नायकभेदवर्णनं नाम प्रथमं परीक्षणम्

यस्य स्वरूपमालम्ब्य सगुणं योगिनो हृदि ।
विभावयन्ति तं वन्दे [१]ज्ञानोद्दीपनमीश्वरम् ॥१॥

आलम्बनविभावास्तु कथ्यन्तेऽनुक्रमादथ ।
तत्रादौ [२]नायकोऽन्यत्तु यतस्तदनुगं स्मृतम् ॥२॥

तत्रादौ तद्गुणाः[३] सर्वे कथ्यन्ते पूर्वशास्त्रतः ।
महाकुलीनतौदार्यं महाभाग्यं [४]कृतज्ञता ॥३॥

यौवनं च [५]विदग्धत्वमुत्साहो दार्ढ्यमेव च ।
तेजस्विता दक्षता च धार्मिकत्वं च तद्गुणाः ॥४॥

महाकुलीनता यथा—

तदन्वये शुद्धमतिः[६] प्रसूतः शुद्धिमत्तरः ।
दिलीप इति राजेन्द्र[७] इन्दुः क्षीरनिधाविव ॥५॥

[ Raghu. I. 12 ]

[८]औदार्यं त्यागः । स च यथा—

कर्णस्त्वचं शिविर्मांसं जीवं जीमूतवाहनः ।
ददौ दधीचिरस्थीनि किमदेयं महात्मनाम् ॥६॥

महाभाग्यं यथा—

स वेलावप्रवलयां परिखीकृतसागराम् ।
अनन्यशासनामुर्वीं शशासैकपुरीमिव ॥७॥

[ Raghu. I. 30 ]

कृतज्ञता यथा—

[९]निष्कण्टकां विधायापि [१०]किष्किन्धानगरस्थितिम्[११] ।
लज्जते रामचन्द्रोऽसौ[१२] सुग्रीवमुखवीक्षणे ॥८॥

---

[१] A. ज्ञनो०, K. ज्ञाना०
[२] L. adds नायके before नायको०
[३] K. omits विसर्ग
[४] L. resumes the normal handwriting with कृतज्ञता which comes in the beginning of the next folio (595; 16).
[५] K. L. विदत्वत्व०
[६] Original शुद्धिमति
[७] Original राजेन्दुरिन्दुः
[८] L. अदार्यं
[९] K. L. निःकं०
[१०] K. L. किष्किध्या०
[११] L. ०स्थिति
[१२] A. ०चंद्रोपि

**यौवनं यथा—**

युवा युगव्यायतबाहुरंसलः कपाटवक्षाः[१] परिणद्धकन्धरः ।
[२]वपुःप्रकर्षादजयद् गुरुं [३]रघुस्तथापि नीचैर्विनयाददृश्यत ॥९॥

[ Raghu. III 34 ]

**विदग्धत्वं यथा—**

रक्षसा मृगरूपेण वञ्चयित्वा स राघवौ ।
जहार सीतां पक्षीन्द्रप्रयासक्षणविघ्नितः ॥१०॥

[ Raghu. XII 53 ]

**उत्साहो यथा—**

अन्त्रैः स्वैरपि संयताग्रचरणो मूर्छाविरामक्षणे
[४]स्वाधीने व्रणिताङ्गशस्त्रविवरे[५] रोमोद्गमं वर्मयन् ।
[६]भग्नानुद्वलयन्निजान् परभटान् संतर्जयन्निष्ठुरं
धन्यो धाम जय[७]-श्रियः पृथुरणस्तम्भे पताकायते ॥११॥

[ Quoted in Daśa. II 11 ]

**व्यवसायादचलनं दार्ढ्यं विघ्नशतैरपि ॥१२॥**

[ यथा—]

प्रारभ्यते न खलु विघ्नभयेन नीचैः[८]
प्रारभ्य विघ्नविहता विरमन्ति मध्याः ।
विघ्नैः पुनः पुनरपि प्रतिहन्यमानाः
प्रारब्धमुत्तमगुणा[९] न परित्यजन्ति ॥१३॥

[ Nīti. 26 ]

**अधिक्षेपाद्यसहनं[१०] तेजः प्राणात्ययेष्वपि ॥१४॥**

[ यथा—]

ब्रूत नूतनकूष्माण्डफलानां के[११] भवन्त्यमी ।
अङ्गुलीदर्शनाद्येन[१२] [१३]विलीयन्ते मनस्विनः ॥१५॥

[ Quoted in Daśa. II 13 ]

[१] L. ०वृक्षाः  [२] K. L. वपु० (omit विसर्ग)
[३] L. रघुथापि (omits ०स्त०)
[४] Original स्वाधीनव्रणिताङ्गशस्त्रनिचितो
[५] L. ०तांगत्राच्च (?) विवरे  [६] K. L. भग्नामु०
[७] L. ०जयः (adds विसर्ग)
[८] A. omits विसर्ग  [९] Original ०जना
[१०] L. omits अनुस्वार  [११] L. omits के
[१२] L. विली दर्शनाद्येन विलीयंते  [१३] Quotation in Dasà न जीवन्ति



**दक्षता क्षिप्रकारित्वं यथा—**

स्फूर्जद्वज्रसहस्रनिर्मितमिव प्रादुर्भवत्यग्रतो
रामस्य त्रिपुरान्तकृद्दिविषदां तेजोभिरिद्धं धनुः ।
शुण्डीरः[१] कलभेन यद्वदचले वत्सेन दोर्दण्डक-
स्तस्मिन्नाहित एव गर्जितगुणं कृष्टं च भग्नं च तत् ॥१६॥

[ Vīra. I 53 ]

**धार्मिकत्वं यथा—**

यः परवादे मूकः परनारीवदनवीक्षणे चान्धः ।
पङ्गुः[२] परधनहरणे स जयति लोके महापुरुषः ॥१७॥

[ ॥इति नायकगुणाः॥ ]

[ ॥अथ नायकभेदाः॥ ]

**स पुनः कविभिः काव्ये चतुर्धा वर्णितोऽधिपः ।**
**धीरोद्दात्तस्तथा [३]धीरललितः स पुनर्भवेत् ॥**
**धीरोद्धतो धीरशान्तश्चतुर्थः परिकीर्तितः ॥१८॥**

[ ॥अथ धीरोदात्तः॥ ]

**कृपावानतिगम्भीरो विनीतश्चाविकत्थनः ।**
**धीरोदात्तः स विज्ञेयो रामो दाशरथिर्यथा ॥१९॥**

**कृपा यथा—**

उत्तालताडकोत्पातदर्शनेऽप्यप्रकम्पितः ।
नियुक्तस्तत्प्रमाथाय स्त्रैणेन विचिकित्सता[४] ॥२०॥

[ Vīra. I 37 ]

**संक्षोभेऽप्यविकारित्वं गाम्भीर्यमिति गीयते ॥२१॥**

**यथा—**

आहूतस्याभिषेकाय विसृष्टस्य वनाय च ।
न मया लक्षितस्तस्य स्वल्पोऽप्याकारविभ्रमः ॥२२॥

[ Quoted in Daśa. II 5 ]

**विनीतो यथा—**

यद्ब्रह्मवादिभिरुपासितवन्द्यपादे
विद्यातपोव्रतनिधौ[५] [६]यमिनां वरिष्ठे ।
[७]दैवात्कृतस्त्वयि मया विनयोपचार-
स्तत्र प्रसीद [८]भगवन्नयमञ्जलिस्ते ॥२३॥

[ Vīra. IV 21 ]

[१] A. ०रं  [२] L. omits विसर्ग  [३] K. L. धीरः
[४] Quotation in Daśa. II 11 विचिकित्सति  [५] A. ०विधौ
[६] Original and quotation in Daśa. II 2 तपतां,
[७] A. K. L. दैवा- कृत (omit ०त्०)  [८] K. L. भगवन्निय०

यथा वा—

उत्पत्तिर्जमदग्नितः स भगवान् देवः पिनाकी गुरु-
[१]र्वीर्यं यत्तु न ते[२] गिरां पथि ननु व्यक्तं हि तत् कर्मभिः ।
त्यागः सप्तसमुद्रमुद्रितमहीनिर्व्याजदानावधिः
सत्यं ब्रह्मतपोनिधेर्भगवतः किं वा न लोकोत्तरम् ॥२४॥
[ Vīra. II 36 ]

अविकत्थनमात्मश्लाघाभावस्तत्रापीदमेवोदाहरणीयम् ॥
[ ॥ इति धीरोदात्तः॥ ]

धीरललितो यथा—

कान्तापरवशो धीरललितो निश्चितो मृदुः ॥२५॥

यथा—

राज्यं [३]निर्जितशत्रु योग्यसचिवे न्यस्तः समस्तो भरः
सम्यक्पालनलालिताः प्रशमिताशेषोप[४]-सर्गाः प्रजाः ।
प्रद्योतस्य सुता वसन्तसमयस्त्वं चेति नाम्ना धृतिं
कामः काममुपैत्ययं मम पुनर्मन्ये महानुत्सवः ॥२६॥
[ Ratnā. I 9 ]
[ ॥इति धीरललितः॥ ]

अथ धीरोद्धतः—

मात्सर्यदर्पभूयिष्ठ[ श्]छद्म्यहङ्कारवाक्[५] छली ।
चण्डो विकत्थनश्चैव धीरोद्धत[६] उदाहृतः ॥२७॥

दर्पोऽमन्दश्चण्डो रुद्रः स्वगुणप्रकाशी विकत्थनः । जामदग्न्यरावणादि यथा—

रुद्रादेस्तुलनं [७]स्वकण्ठविपिनच्छेदो हरेर्वासनं
कारावेश्मनि पुष्पकस्य च जयो यस्योर्जिताः[८] केलयः ।
सोऽहं दुर्दमदण्डबाहुसचिवो लङ्केश्वरस्तस्य मे
का श्लाघा गुणजर्जरेण[९] धनुषा कृष्टेन भग्नेन वा ॥२८॥
[ ॥इति धीरोद्धतः॥ ]

अथ धीरशान्तः—

शान्तो विनीतो धीरश्च धीरशान्तो द्विजो वणिक् ॥२९॥

---

[१] A. L. ०वीयं (omit रेफ)
[२] Quotation in Daśa II 2 तद्गिरा
[३] A. K. L. निर्जितयोग्यशत्रुसचिवे
[४] A. ०पि
[५] K. L. ०वाक
[६] L. ०द्धात
[७] A. स्वकंपिवचनछेदोर्हरेवासनं
[८] L. omits विसर्ग
[९] A. ०कर्करेण



यथा माधवः[१]—

[ तत उदयगिरिरिवैक एव स्फुरितगुणद्युतिसुन्दरः कलावान् ।
इह जगति महोत्सवस्य हेतुर्नयनवतामुदियाय बालचन्द्रः ॥]
[ Mālatī. II 10 ]
[ ॥इति धीरशान्तः॥ ]

[ ॥अथ श्रृङ्गारनायकः; तस्य चतुर्विधत्वं च॥ ]

एते तु नायकाः [२]सर्वरससाधारणाः स्मृताः ।
श्रृङ्गारनायकस्त्वन्यः पञ्चमः कथ्यते यथा ॥
विलासवान्[३] कलाशीलः सुभगः स्थिरवाक्(ग्) युवा ॥३०॥

गतिः सधैर्या दृष्टिः सविलासा[४] सस्मितं वचः ॥३१॥

तत्र विलासो(सी) यथा—

विस्रस्तमंसादपरो विलासी रत्नानुविद्धाङ्गदकोटिलग्नम् ।
[५]प्रावारमुत्कृष्य यथाप्रदेशं निनाय साचीकृतचारुवक्त्रः ॥३२॥
[ Raghu. VI 14 ]

सौभाग्यवान् कलावांश्च यथा—

असौ[६] विद्याधारः[७] शिशुरपि विनिर्गत्य भवना-
दिहायातः संप्रत्यविकलशरच्चन्द्रमधुरः[८] ।
[९]यदालोकस्थाने भवति [१०]पुरमुन्मादतरलैः
कटाक्षैर्नारीणां कुवलयितवातायनमिव ॥३३॥
[ Mālatī. II 11 ]

स्थिरानुरागित्वं यथा—

[११]न जाने तपसो वीर्यं सा बाला परवतीति [१२]मे विदितम् ।
न च निम्नादिव सलिलं निवर्तते मे ततो हृदयम् ॥३४॥
[ Śākuntalam III 2 ]

स पुनः श्रृङ्गारनायक[१३]-श्चतुर्विधः—

अनुकूलः स्मृतस्त्वाद्यो दक्षिणश्च ततः परः ।
शठस्तृतीयो धृष्टश्च चतुर्थश्च क्रमादमी ॥३५॥

---

[१] A. K. L. omit the illustrative verse for माधव; it has been given within square brackets by the Editor in accordance with the quotation found in Daśa. II 4.
[२] A. सर्वे
[३] K. L. ०सवा फला० (A. कुला०)
[४] A. ०लास०
[५] Original प्रालम्बमुत्कृष्य यथावकाशं
[६] K. L. अयं
[७] Original विद्याशाली
[८] Original ०वदनः
[९] K. L. यथा
[१०] K. L. पर०
[११] A. omits न
[१२] K. L. omit मे
[१३] L. omits क००

तत्राद्यो [अनुकूलः] यथा—

अनुकूलः स्मृतस्त्वेकनायिकोऽयं[1] मताङ्गतः ॥३६॥

यथा—

[2]श्लाघ्यस्त्यागोऽपि वैदेह्याः पत्युः प्राग्वंशवासिनः ।
[3]अनन्यजातेस्तस्याऽऽसीत् सैव जाया हिरण्मयी ॥३७॥

[ Raghu. XV 61 ]

[दक्षिणो यथा—]

यः[4] स्नेहलौल्यवैषम्यवशत[5]-स्तुल्यतामियात् ।
नायिकास्वप्यनेकासु दक्षिणः स स्मृतो यथा ॥३८॥

यथा—

स्नाता तिष्ठति कुन्तलाधिपसुता [6]वारोऽङ्गराजस्वसु-
र्द्यूते रात्रिरियं जिता कमलया देवी प्रसाद्याद्य [7]च ।
इत्यन्तःपुरसुन्दरीः प्रति मया विज्ञाय विज्ञापिते
देवेनाप्रतिपत्तिमूढमनसा द्वित्राः स्थितं[8] नाडिकाः ॥३९॥

[ Quoted in Daśa. II 7 and S. D. III 35 ]

[शठो यथा—]

गूढविप्रियकृच्छठः[9] ।

यस्त्वज्ञातं परैः कुर्याद् विप्रियं नायिकां[10] प्रति ॥
तावन्मात्रपरिज्ञातं शठः स भणितो यथा ॥४०॥

[यथा—]

शठान्यस्याः काञ्ची-[11]मणिरणितमाकर्ण्य सहसा
यदाश्लिष्यन्नेव प्रशिथिल[भुज]-ग्रन्थिरभवः ।
तदेतत् क्वाऽऽचक्षे घृतमधुमयं त्वद्बहुवचो-
विषेणाघूर्णन्ती[12] किमपि न सखी मे गणयति ॥४१॥

[ Amaru. 109 ]

[धृष्टो यथा—]

कृताप्रियोऽपि निःशङ्को विलज्जो[13] भर्त्सितोऽपि सन् ।
दोषे व्यक्तेऽपि मिथ्येति वादी धृष्टः स उच्यते ॥४२॥

---

[1] K. L. ०नायिकायत्ततांगतः  [2] L. श्लाघ्यागोपि
[3] Original अनन्यजानेः सैवासीद् यस्माज्जाया
[4] A. L. omit विसर्ग  [5] K. L. ०वशते०
[6] K. चांगेंगरागश्चसु, L. चांगेंगश्चसु
[7] A. omits च and leaves blank space.  [8] L. omits अनुस्वार
[9] A. omits ०ठः यस्त्वज्ञातं and gives dots in blank space.
[10] K. L. ०कं  [11] K. L. मणितमिद०
[12] K. L. ०घूर्णं त्वं  [13] K. L. विलक्षो



[1]लाक्षालक्ष्म ललाटपट्टमभितः केयूरमुद्रा गले
वक्त्रे कज्जलकालिमा नयनयोस्ताम्बूलरागोऽपरः ।
दृष्ट्वा कोपविधायि-मण्डनमिदं प्रातश्चिरं प्रेयसो
लीला-[2]तामरसोदरे मृगदृशः श्वासाः समाप्तिं गताः ॥४३॥

[ Amaru. 60 ]

[3]शठद्(धृ)ष्टावपि पूर्वस्यां नायिकायां प्रकीर्तितौ ।
रसभावप्रसङ्गेन मतौ सहृदयौ सताम् ॥४४॥

एते चावस्थाविशेषा वत्सवृषभादिवत् ॥

[ ॥इति चतुर्विधः शृङ्गारनायकः॥ ]

अथास्य सहायाः—

गूढमन्त्रः शुचिर्वाग्मी भक्तो नर्मविचक्षणः ।
स्यान्नर्मसचिवस्तस्य कुपितस्त्रीप्रसादकः ॥४५॥

स च त्रिधा भवेत्तत्र पीठमर्दो[4] विटस्तथा ।
विदूषक इति प्रोक्तस्तल्लक्षणमथोच्यते ॥४६॥

किञ्चिदूनो भवेत्तत्र पीठमर्दस्तु नायकः ।
एकविद्यो विटः प्रोक्तो हास्यकृच्च विदूषकः ॥४७॥

संधाननिपुणश्चैव नर्मवित् त्रिविधोऽपि सः ।
क्रमेणोदाहृतीरेषां वक्ष्ये [5]लक्ष्मानुसारतः ॥४८॥

विमुञ्चामुं मानं सफलय वचः साधुसुहृदाम्
मुधा संतापेन ग्लपयसि किमङ्गं स्मरभुवा ।
प्रियं पादप्रान्तं प्रणतमधुना मानय भृशम् ।
न मुग्धे प्रत्येतुं प्रभवति गतः कालहरिणः ॥४९॥

प्रणयिनि भृशं तस्मिन् मानं मनस्विनि मा कृथा[:]
किमपरमितो युक्तायुक्तैर्विना ह्यमुना तव ।
अयमपि [6]भवेत् संप्रत्येवं क्षयानिलसन्निभः
सरस-[7]बिसिनीकन्दच्छेदच्छविर्मृगलाञ्छनः ॥५०॥

---

[1] K. L. लक्ष०  [2] L. ०तारमर०
[3] A. omits this verse here and reads it after the first half of verse 51 below, indicating its right location with a cross mark.
[4] L. ०मर्दो  [5] K. L. लक्ष्या०
[6] K. L. तावत्  [7] K. L. ०बिशनी०

दूरात् कन्दलितैर्हृदि प्रविततैः कण्ठे लुठद्भिर्हठाद्
वक्त्रे संकटनासिकातरलितैर्निर्यद्भिरत्यूष्मभिः[1] ।
निःश्वासैः पृथु मन्मथोत्थदवथुर्व्यक्तं [2]न वाचोदितो
मिथ्यालम्बिनि सौष्ठवे कृतमतः कोपेन कान्तं प्रति ॥५१॥

यन्नायिकासु कृतकं रमयन्ति कान्त-
मानन्दकैरकृतकैरिव [3]सर्वभावैः ।
भावावबोधनिपुणं जगदेककान्त-
मेकान्तके निगदिताः खलु तेन भावाः ॥५२॥

इति श्रीराजाधिराज-[4]कालसेनमहीमहेन्द्रेण विरचिते संगीतराजे षोडशसाहस्र्यां संगीतमीमांसायां रसरत्नकोशे विभावोल्लासे नायकभेदवर्णनं नाम प्रथमं परीक्षणं समाप्तम् ॥

---

[1] K. L. रित्यूष्मभिः
[2] A. K. L. तवाचे (A. ०वे०) दितो
[3] K. L. सार्वं०
[4] K. L. ०श्रीकुम्भकर्ण०

6-7-66

## नायिकालक्षणं नाम द्वितीयं परीक्षणम्

यं सुरूपाः[1] सुमनसः प्रेमाबन्धनिरन्तराः ।
संभूयोपासते सर्वा राजकन्या रसाकुलाः ॥१॥

रसानुरूपा वर्ण्यन्ते नायिकानां भिदा[2] अथ ।
यतः शृङ्गारसर्वस्वमेता एव मुनेर्मताः ॥२॥

॥ अथ नायिकाः ॥

[3]स्वाऽन्या साधारणस्त्रीति तद्गुणा नायिकास्त्रिधा ॥३॥

तत्र स्वकीया यथा—

रूपसम्पन्नमग्राम्यं प्रेमप्रायं [4]प्रियंवदम् ।
कुलीनमनुकूलं च कलत्रं केन लभ्यते ॥४॥

संपत्तौ च विपत्तौ च मरणेऽपि न मुञ्चति ।
या स्वीया तां [5]प्रति प्रेम जायते पुण्यकारिणः ॥५॥

[अन्या यथा—]

कन्या चैव परोढा च तथाऽन्याऽपि द्विधा[6] मता ॥६॥

तत्र [7]कन्या यथा—

जाने तपसो वीर्यं सा बाला परवतीति मे विदितम् ।
न च निम्नादिव सलिलं निवर्तते मे ततो हृदयम् ॥७॥

[ Śākuntalam III 2 ]

किमपि [8]ललितैः स्निग्धैः [9]किञ्चित्किमप्यतिकुञ्चितैः[10]
किमपि ललितैः कन्दर्पपून्[11] हसद्भिरिवेक्षणैः ।
[12]अभिनवमुखं वीक्षाञ्चक्रे नवाङ्गनया तथा
[13]ललितकुशलोऽप्यालीलोको यथातिविसिस्मिये ॥८॥

---

[1] A. ०पात्, K. L. ०पा (omit विसर्ग)
[2] K. L. भिदाश्रया
[3] K. स्वान्य, L. स्वांन्य
[4] L. omits प्रियं०
[5] K. L. पति
[6] A. द्विता
[7] K. L. अन्या
[8] A. चालतैं
[9] L. कैंचित्
[10] L. ०कुंचितौः
[11] A. omits ०न् हस० and gives dots in blank space.
[12] K. L. अभिमुखमतं
[13] L. लालित०

[1]निशमय्य बहिर्मनोगत-स्वरमैक्षिष्ट तथा परा यथा ।
तृणमात्रकमप्यभून्नहि श्रवणेन्दीवरलोचनान्तरम् ॥९॥

कस्याश्चित् सुभग इति श्रुतश्चिरं घ-
स्तं[2] दृष्ट्वा विगतरते-[3]र्निमीलिताक्ष्याः ।
निष्पन्दं वपुरवलोक्य सौविदल्ला:[4]
संतेपुर्विधुरधियो निशान्तवध्वाः ॥१०॥

कार्श्य-जागर-सन्तापान् यः करोति श्रुतोऽप्यलम् ।
तमेव [5]दुर्लभं कान्तं चेतः कस्माद् दिदृक्षसे ॥११॥

**साक्षाच्चित्ते तथा स्वप्ने तस्यास्तद्दर्शनं त्रिधा ।**
**देशे[6] काले तथा भङ्ग्या श्रवणं चास्य तद्यथा ॥१२॥**

सत्यं सन्ति गृहे गृहे प्रियतमा [7]येषां भुजालिङ्गन-
व्यापारोच्छलदक्षमोहनजलाज्जायन्त एणीदृशः ।
प्रेयान् कोऽप्यपरोऽपि[8] यत्र नियतं दृष्टेऽपि यस्मिन् वपुः
स्वेदोज्जृम्भणकम्पसाध्वसमुखैः प्राप्नोति कांचिद्दशाम् ॥१३॥

चित्रं चित्रगतोऽप्येष ममालि! मदनोपमः ।
समुन्मूल्य बलाल्लज्जामुत्कण्ठयति मानसम् ॥१४॥

मुग्धा स्वप्नसमागते प्रियतमे तत्पाणिसंस्पर्शनात्[9]
रोमाञ्चाञ्चितया शरीरलतया [10]संस्तभ्य कोपात् किल ।
मा मां वल्लभ! संस्पृशेति सहसा [11]सेयं वदन्ती मुहुः
सख्या नो हसितं सचिन्तमसकृत् संशोचिता प्रत्युत[12] ॥१५॥

[13]स्फारस्फुरत् प्रदीपं सौधं मधु सोत्पलं कलं गीतम् ।
प्रियसखि सकलमिदं तव सफलं खलु यदि भवेत् सोऽत्र[14] ॥१६॥

विकसति कैरवनिकरे सरति च सरसीसमीरणे सुतनु ।
चुम्बत्यम्बरमिन्दौ तव तेन विना रतिः कीदृक् ॥१७॥

---

[1] A. omitsनिशमय्य वहि॰ and gives dots in blank space.
[2] A. omits ॰स्तं
[3] A. ॰निमी॰ (omits रेफ)
[4] A. ॰ल्ल:
[5] K. L. दुलभं
[6] A. देश॰
[7] A. एषां
[8] K. L. ॰परो[ऽ]यमत्र
[9] A. ॰स्पर्शन, K. L. ॰स्पर्शनं
[10] A. स्तंभस्य
[11] A. शून्ये, L. सायं
[12] A. adds विसर्ग, L. प्रेत्युत
[13] K. स्फारत् स्फुरत्, L. स्फारत्फुरत्
[14] K. सोथ, L. सोथे



[1]अञ्जननिरस्तदृशस्ते कुचयो-[2]रजनिरलं [3]तव न मुग्धे ।
यदि दृश्यते न स युवा निर्भरमालिङ्ग्यते नैव ॥१८॥

द्रष्टुं वक्तुं च नो कन्या रक्ता शक्नोत्यमुं स्फुटम् ।
पश्यन्तमभिजल्पन्तं विविक्तेऽपि [4]ह्रिया [5]यथा ॥१९॥

[6]कामं न पश्यति दिदृक्षत एव भूम्ना
नोक्ताऽपि [7]जल्पति विवक्षति चादरेण ।
लज्जास्मर-[8]व्यतिकरेण मनोऽधिनाथे
बाला रसान्तरमिदं ललितं बिभर्ति ॥२०॥

**विज्ञातनायिका[9]-चित्ता सखी वदति नायकम् ।**
**नायको वा सखीं तस्याः[10] प्रेमाभिव्यक्तये यथा ॥२१॥**
[यथा--]

कण्टकिततनुशरीरा लज्जा-[11]मुकुलायमाननयनेयम् ।
तव कुमुदिनीव वाञ्छति नृचन्द्र ! बाला करस्पर्शम् ॥२२॥

यत्तापयन्ति शिशिरांशुरुचो यदेते
संमोहयन्ति च विनिद्रसरोजवाताः[12] ।
यत् स्विद्यते तनुरियं च स एष दोषः
[13]सख्यास्तथैव सुतनु प्रचुरत्रपायाः ॥२३॥

अपश्यन्ती तु सा कान्तं स्फारिताक्षी निरीक्षते ।
दूरादालोकयत्येव[14] सखीं स्वजति निर्भरम् ॥२४॥

निर्निमित्तं हसन्ती च सखीं वदति किञ्चन ।
सव्याज[15]-सुन्दरं किञ्चित् (द्) [16]गात्रमाविष्करोति[17] च ॥२५॥

सव्यापि(?) स्थापितां मालां काञ्च्यादिरचितां पुनः ।
चेष्टां च कुरुते रम्यामङ्ग-[18]भङ्गैः शुभैर्यथा ॥२६॥

---

[1] K. L. अजन॰
[2] K. L. ॰रभवनिरलं
[3] K. L. भवनु (तु ?)
[4] K. L. ॰ड्रिया (?)
[5] L. omits य॰
[6] K. L. कामं दृश्यक्षत एव भूम्ना
[7] A. लज्जित॰
[8] K. L. ॰त्यति or त्पति॰
[9] A. नायका॰, K. L. repeat ॰का॰
[10] A. omits अनुस्वार
[11] K. ॰मुकुलानयमान॰, L. लज्जकुलानयमान॰
[12] K. L. omit विसर्ग
[13] K. L. सख्युस्तवैव
[14] K. ॰तेव
[15] K. L. add अनुस्वार
[16] K. L. भाव॰
[17] A. K. L. ॰माविःकरोति
[18] K. L. ॰भागैश्चतैयथा

[1]अभिमुखगते यस्मिन्नेव प्रियं बहुशो वद-
त्यवनतमुखं तूष्णीमेव स्थितं मृगनेत्रया ।
अथ किल चलल्लीलालोलं स एव तथेक्षितः
कथमपि यथा दृष्ट्या[2] मन्ये [3]कृतं श्रुतिलङ्घनम् ॥२७॥

तिर्यग्वक्रितगात्रयष्टिविषमोद्वृत्तस्तनास्फालन-
[4]त्रुट्यन्मौक्तिक[5]-मालया सपुलकस्वेदोल्लसद्गण्डया ।
दूरादेव विलोकयत्यभिमते तद्वक्त्रदत्तेक्षणं
दुर्वारस्मरया तया सहचरी गाढं समालिङ्गिता[6] ॥२८॥

अनिमित्तं यद् विहसति [7]निष्कारणमेव यत् सखीं वदति ।
दयितं विलोक्य तदियं [8]शंसति तदधीनमात्मानम् ॥२९॥

प्रादुष्यद्भुजमूलकान्तिलुलितामुद्यम्य दोर्वल्लरीं
[9]वल्गत्पीनपयोधरस्थल-[10]लुलन्मुक्तावली-सुन्दरम् ।
अङ्गुल्या प्रचलत्करेऽपि वलयस्थानोपहूतस्मरं
तन्व्याः कुञ्चितलोचनं विजयते तत्कर्णकण्डूयनम् ॥३०॥

स्रजोऽवतंसं रसनां च किञ्चित्[11] प्रियं समालोक्य समासजन्ती ।
पुनस्तरां सा सुहृदो ददाति प्रत्यङ्गमावासमिव स्मरस्य[12] ॥३१॥

[13]व्याजृम्भणोल्लसितदन्तमयूखजालं
व्यालम्ब्य मौक्तिकगुणं रमणे मुदेव ।
[14]ऊर्ध्वे मिलद्भुजलतावलयप्रपञ्च-
सत्तोरणं हृदि [15]विशत्यपरा व्युदास्य ॥३२॥

[अथ परोढा यथा—]

परोढा यद्यपि प्रायो न महाकविभिः स्फुटम् ।
प्रवध्यते [16]स्वे प्रबन्धे तथाऽप्यत्रोच्यते कियत् ॥३३॥

---

[1] K. L. omit the first two lines of this verse.
[2] A. looks like दृष्ट्वा [3] K. L. look like हृतं
[4] A. तृ० [5] L. ०मोक्तिक० [6] L. adds विसर्ग
[7] K. L. निःका० [8] K. L. शसति [9] K. L. वलात्
[10] K. L. लस० [11] K. L. omit ०त्
[12] A. omits ०स्य ॥ and व्याजृम्भ०of the beginning of the next verse. [13] L. व्याकृंभिणो० [14] A. ऊध्वं
[15] A. omits विशत्यपरा व्युदास्य and gives dots in blank space.
[16] K. L. स्वं०



यथा—

उल्लङ्घ्यापि सखीवचः समुचितामुन्मूल्य लज्जामलं
[1]हित्वा [2]भीतिभरं निरस्य च निजं सौभाग्यगर्वं मनाक् ।
आज्ञां केवलमेव मन्मथगुरोरादाय नूनं मया
त्वं [3]निःशेष-[4]विलासिवर्गगणनाचूडामणि[5]! संश्रितः[6] ॥३४॥
[Sāriga. 3444]

चक्षु-[7]र्मीलति सानन्दं नितम्बं प्रसवत्यपि ।
वेपते च तनुस्तन्व्यास्तस्यास्तद्दर्शने यथा ॥३५॥

मीलन्मन्थरचक्षुषा परिपतत्-[8]काञ्चीग्रहव्यग्रया
गाढानङ्गभर-[9]स्रवद्जघनया कम्पोपरुद्धाङ्गया ।
सर्वाङ्गं चटुकारकोऽप्यवलया संकेतके कौतुका-
दास्तां रन्तुमहो निरीक्षितुमपि प्रेयान्न संभावितः ॥३६॥

नाभियुक्ते स्वयं कान्ता मुग्धत्वादुत्थिताऽपि तम् ।
तदवस्थां[10] तु कान्ताय [11]तत्सखी [12]कथयेद् यथा ॥३७॥

निःश्वासेषु [13]स्खलितकदलीबीजनं तापसंप-
न्नेत्राम्भोभिः[14] श्वसितपतितैः [15]सिञ्च्यते च स्तनान्तः ।
तस्याः किञ्चित् सुभग ! तदभूत्तानवं त्वद्वियोगे[16]
येनाकस्माद्वलयपदवीमङ्गुलीयं प्रयातम्[17] ॥३८॥

अनन्यशरणा स्वीया धनहार्या [18]पराङ्गना ।
अस्यास्तु केवलं प्रेम तेनैषा[19] रागिणां मता ॥३९॥

सामान्यवनिता वेश्या प्रगल्भैव[20] स्वभावतः ।
न च रागवती क्वापि क्वचिद्रागोऽपि[21] दृश्यते॥ ४०॥

---

[1] Original भित्वा
[2] A. looks like नीति० [3] A. नः शेष०
[4] A. K. L. ०विलास० [5] A. ०मणौ, K. L. ०मणे
[6] Original संभृतः [7] L. ०मीलति (omits रेफ)
[8] L. ०कंची० [9] A. स्रवद्रवणया
[10] K. L. omit अनुस्वार [11] A. यत्०
[12] A. कथ्यते [13] K. L. स्खलति
[14] K. L. omit विसर्ग [15] K. L. सिच्यते
[16] A. ०योगो [17] K. L. ०तिम्
[18] L. परांगगता [19] A. adds अनुस्वार
[20] A. ०ल्भेव [21] L. ०चिद्रीगापि

तस्यां पुंसोऽनुरागो यः[१] शृङ्गाराभास एव सः ।
किन्तु केलिकलास्फीतं तद्रतं मूढमोहनम् ॥४१॥

आदर्शनात् प्रविष्टा सा मे सुरलोकसुन्दरी हृदयम् ।
बाणेन मकरकेतोः[२] कृतमार्गमवन्ध्यपातेन ॥४२॥

गाढालिङ्गनपीडितस्तनतटं स्विद्यत्कपोलस्थलं
संदष्टाऽधरमुक्त-सीत्कृत-[३]मतिभ्रान्तभ्रुनृत्यत्करम् ।
चाटुप्रायवचो [४]विचित्रभणितं घातै रुतै-[५]श्चाङ्कितं
वेश्यानां धृतिधाम पुष्पधनुषः प्राप्नोति धन्यो रतम्[६] ॥४३॥

[ Śṛṅgāra. 21 ]

ईर्ष्या-निःशङ्ककेलीनामभावात् पूर्वयोषिति[७] ।
अस्यामेतद् द्वयं दृष्ट्वा रमते[८] पापचेतनः[९] ॥४४॥

अन्या पुनस्त्रिविधा मुग्धा मध्या प्रगल्भा चेति ॥४५॥

मुग्धाऽल्पयौवना मूढा लज्जाविजितमन्मथा ।
[१०]मानोऽस्या मन्मथस्तोकमि(इ)ति भावविदो विदुः ॥४६॥

तत्राल्पयौवनं यथा —

विस्तारी स्तनभार एष गमितो[११] न[१२] [१३]स्वोचितामुन्नतिं[१४]
रेखोद्भासि [१५]तथा वलित्रयमिदं न स्पष्टनिम्नोन्नतम् ।
[१६]मध्येऽस्या ऋजुरायतार्धकपिशा रोमावली निर्मिता
रम्यं यौवनशैशवव्यतिकरोन्मिश्रं[१७] [१८]वपुर्वर्तते ॥४७॥

[ Quoted in Daśa. II 16 ]

[१], [२] K. L. omits विसर्ग
[३] A. ०मिति
[४] K. विचित्रमणितं, L. वित्रमणितं
[५] L. ०श्चों०
[६] A. रसम्
[७] A. पूर्वयोनि च
[८] A. रमति
[९] L. omits विसर्ग
[१०] K. L. मनो०
[११] A. ०ता
[१२] L. स्व
[१३] L. स्वौ०
[१४] L. omits अनुस्वार
[१५] Quotation in Daśa. ०कृतं
[१६] A. मध्योस्या, K. L. मध्ये स्यात्
[१७] K. ०मृष्टं, L. ०मिष्ठं
[१८] Quotation in Daśa. वयो वर्तते



[१]मूढत्वनविवेकिता प्रसिद्धैव । [यथा —]

मुग्धे[२] मुग्धतयैव नेतुमखिलः कालः किमारभ्यते
मानं धत्स्व धृतिं[३] बधान ऋजुतां दूरे कुरु प्रेयसि ।
[४]सख्यैवं प्रतिबोधिता प्रतिवचस्तामाह भीतानना
नीचैः शंस[५] हृदि स्थितोऽपि ननु मे[६] प्राणेश्वरः श्रोष्यति ॥४८॥

[ Amaru. 70 ]

लज्जाविजितमन्मथा यथा —

व्याहृता प्रतिवचो न संदधे गन्तुमैच्छदवलम्बितांशुका ।
सेवते स्म शयनं पराङ्मुखी सा तथापि रतये पिनाकिनः ॥४९॥

[ Kumāra. VIII 2 ]

मृदुनिष्फलमानत्वं यथा —

श्रुत्वा सखीभ्यः कान्तस्य शाठ्यं कोपकषायिता ।
आलिङ्गिता[७] हठात्तेन नास्मरत् साध्वसाविला ॥५०॥

.............मध्या संलक्ष्ययौवना ।
तुल्यलज्जास्मरा ज्ञेया मोहान्तसुरतक्षमा ॥५१॥

मध्यायाः[८] [९]संलक्ष्ययौवनं यथा —

उन्मीलितं तूलिकयेव चित्रं [१०]सूर्यांशुभिर्भिन्नमिवारविन्दम् ।
बभूव तस्याश्चतुरस्रशोभि वपुर्विभक्तं नवयौवनेन ॥५२॥

[ Kumāra. I 32 ]

तरत्तारं चक्षुः क्षपयति मुनीनामपि दृशः
कुचद्वन्द्वाक्रान्तं हृदयमहृदः कान्न कुरुते ।
गतिर्मन्दीभूता हरति गमनं [११]मन्मथवता
अहो तन्व्यास्तुल्यं तरुणिमनि(णि) सर्वं विजयते ॥५३॥

दृष्टिः[१२] स्निह्यति निर्भरं प्रियतमे वैदग्ध्यभाजो गिरः
कामं कुन्तलमालिका[१३]-विरचने[१४] [१५]त्यक्तोऽन्यकर्मग्रहः[१६] ।
वक्षः संव्रियते पुनः पुनरिदं लीलालसं गम्यते
जाता [१७]शुभ्रमनोरमा तव दशा कस्मादकस्मादियम् ॥५४॥

[१] L. मूढत्वे (The हलन्त mark in K. below ०त of स्यात् in the third line of verse 47 has been deciphered as ` मात्रा)
[२] A. मुग्धै
[३] K. L. धृतं
[४] A. साल्येवं
[५] K. L. शंश
[६] K. L. omit मे
[७] A. ०लिगन०
[८] K. L. omit विसर्ग
[९] A. संलक्ष्यते
[१०] L. सूर्याश्रु०
[११] K. L. जहार तस्या
[१२] L. omits विसर्ग
[१३] L. ०माका० (omits ०लि०)
[१४] A. ०न०
[१५] A. K. L. त्यक्ता० or त्यक्त्वा०
[१६] A. ०कर्माग्रहः
[१७] K. सुद्भु०, L. सुद्रु०

**तुल्यलज्जास्मरत्वं यथा—**

सुप्तोऽयं सखि सुप्यतामिति गताः सख्यस्ततो[1]ऽनन्तरं
प्रेमावेशितया मया सरलया न्यस्तं मुखं तन्मुखे ।
ज्ञातेऽ-[2]लीकनिमीलने नयनयोर्धूर्त्तस्य[3] रोमाञ्चतो
लज्जाऽऽसीन्मम[4] तेन साऽप्यपहृता तत्कालयोग्यैः क्रमैः ॥५५॥

[ Amaru. 37 ]

**मोहान्तसुरतक्षमात्वं यथा—**

गाढालिङ्गनवामनीकृतकुचप्रोद्भूत-[5]रोमोद्गमा
सान्द्रस्नेहरसातिरेकविगलच्छ्रीमन्नितम्बाम्बरा ।
मा मा मानद माति मामलमिति क्षामाक्षरोल्लापिनी
सुप्ता[6] किं [7]नु मृता नु किं मनसि मे लीना[8] विलीना नु किम् ॥५६॥

[ Amaru. 40 ]

[9]यत्रार्कायितमिन्दुना सरसिजैरङ्गारपुञ्जायितं[10]
[11]क्रुद्धायां मयि नाथ[12] ते कदलिकाकाण्डैः[13]लातायितम् ।
कालोऽन्यः खलु कोऽपि सोऽमृतमयो जातो विषात्माऽधुना
धिक् त्वां धूर्त! विनिर्यदश्रुरबला मोहं वदन्ती गता ॥५७॥

**अथ [14]प्रगल्भा—**

**यौवनान्धा स्मराक्रान्ता[15]-लज्जाऽऽनन्दाविला रते ॥५८॥**

**यौवनान्धात्वं यथा** –

स्तनतटमतीव[16] तुङ्गं निम्नो नाभिः समुन्नतं जघनम् ।
इति विषमे हरिणदृशो वपुषि नवे क इव न स्खलति ॥५९॥

[ Quoted in Daśa II 18 ]

---

[1] L. ०स्तते०
[2] K. L. ०नेक०
[3] K. L. ०वृंत्तस्य
[4] L. ०मा
[5] A. रामो०
[6] L. सुप्तौ
[7] K. L. न
[8] K. L. लीला
[9] K. L. यत्रार्कार्चित० (K. deletes the रेफ on ०चित० with a slanting stroke, L. ignores the deletion.)
[10] K. L. ०पूजायितं
[11] K. L. look like क्षुद्रायां
[12] K. L. नाथने (L. ०नें)
[13] A. omits ०ला०
[14] K. L. प्रागल्भ्या
[15] ~~A. K.~~ ०कान्त०
[16] Quotation in Daśa. reads as follows :—
स्तनतटमिदमुत्तुंगं निम्नो मध्यः समुन्नतं जघनम् ।
विषमे मृगशावाक्ष्या वपुषि नवे क इव न स्खलति ॥



**स्मराक्रान्त-लज्जात्वं[1] रतानन्दाविलात्वं[2] यथा—**

क्वचित्ताम्बूलाक्तः [3]क्वचिदगुरुपङ्काङ्कमलिनः
क्वचिच्चूर्णोद्गारी क्वचिदपि च [4]सालक्तकपदः ।
[5]वलीभङ्गाभोगैरलकपतितैः[:] शीर्णकुसुमैः
[6]स्त्रियाः सर्वावस्थ्यं प्रथयति [7]रतिप्रच्छदपटः ॥६०॥

[ Amaru. 107 ]

यत्र स्वेदसवैरलं विलुलितैर्व्यालुप्यते चन्दनं
सच्छेदैर्भणितैश्च यत्र रणितं निह्नूयते[8] नूपुरम् ।
यत्रायान्त्यचिरेण सर्वविषयाः कामं [9]तदेकाग्रतां
सख्यंस्तत् सुरतं भणामि [10]धृतये शेषा तु लोकस्थितिः ॥६१॥

कृतं मिथ्यावादैर्विरम विदितं कामुक! चिरात्
प्रियां तामेवोच्चै-[11]रभिसर यदीयै-[12]र्नखपदैः ।
विलासैश्च प्राप्तं तव हृदि पदं रागबहुले
मया किं ते कृत्यं ध्रुवमकुटिलाचार[13]-परया ॥६२॥

**मध्याप्रगल्भयोर्मानविधौ[14] त्रैविध्यम् । धीराऽधीरा परुषा चेति ॥**

**स्त्रीणामीर्ष्याकृतः कोपो मानोऽन्यासङ्गिनि प्रिये ॥६३॥**

**धीरा [15]गुप्तविकारा [16]स्यादादराङ्गार्पणादिकृत् ॥६४॥**

**तत्राकारादिगोपनमादरश्च यथा—**

एकत्रासनसंस्थितिः परिहृता प्रत्युद्गमाद्दूरत-
स्ताम्बूला-[17]नयनच्छलेन रभसाऽऽश्लेषोऽपि संविघ्नितः ।
आलापोऽपि न मिश्रितः परिजनं व्यापारयन्त्याऽन्तिके
कान्तं प्रत्युपचारतश्चतुरया कोपः [18]कृतार्थीकृतः ॥६५॥

[ Amaru. 18 ]

---

[1] A. omits ०त्वं
[2] K. L. ०विलत्वं
[3] K. L. क्वचिदपि गुरु०
[4] K. D. सालकपदः
[5] K. L. omit this line and the next one.
[6] Original स्त्रिया नानावस्थं
[7] Original रतं प्रच्छदपटः
[8] K. L. ०तो नौपुरम्
[9] L. तदि०
[10] K. L. रतये
[11] L. ०रेभि०
[12] L. ०र्तवं०
[13] A. ०चाप०
[14] K. L. ०विधो त्रै०
[15] A. गुप्ति०
[16] K. adds द्याद०, L. दाद० between ०विकारा and ०स्यादा०
[17] K. L. ०हरण०
[18] K. L. कृतः (L. ०तंः), omit कृतार्थी०

उवासीनतया [१]स्दाङ्गार्पणं यथा--

आयस्ता कलहं पुरेव कुरुते न स्रंसने वाससा
[२]भुग्नभ्रूर्न च खण्डयमानमधरं धत्ते न केशग्रहम्(०ग्रहे)।
अङ्गान्यर्पयति स्वयं भवति नो वामा [३]हठालिङ्गने
तन्व्या शिक्षित एव संप्रति पुनः कोऽयं[४] प्रकारोऽपरः ॥६६॥

[ Amaru. 106 ]

[स्याद्] अधीरासु वक्रोक्तिः, [५]यथा—

कोपो यत्र भ्रुकुटिरचना[६] विग्रहो यत्र मौनं
यत्रान्योन्यस्मितमनुनयो दृष्टिपातः प्रसादः।
तस्य[७] प्रेम्णस्तदिद[८]-मधुना [९]वैशसं पश्य जातं[१०]
त्वं पादान्ते लुठसि न च मे मन्युमोक्षः खलायाः ॥६७॥ [ Amaru. 38 ]

,परुषाऽऽतर्ज्य ताडयेत् ॥६८॥

यथा—

कोपात् कोमललोलबाहुलतिकापाशेन बद्धा दृढं
नीत्वा[११] [१२]केलिनिकेतनं दयितया सायं सखीनां पुरः।
भूयोऽप्येवमिति स्खलन्मृदुगिरा संसूच्य दुश्चेष्टितं
धन्यो हन्यत एव [१३]निह्नुतिपरः प्रेयान् [१४]रुदत्या हसन् ॥६९॥

[ Amaru. 9 ]

[१५]अनेनैव प्रकारेण मानापनयौ[१६] सुगमदुर्गमौ वेदितव्यौ। तत्र मानापनोदनोपायो यथा–

साम्ना दानेन भेदेन नत्युपेक्षारसान्तरैः ॥७०॥

तत्र चाटुवचनं [१७]सामाथ, यथा—

अपराधीनः सोऽहं प्रसीद रम्भोरु! विरम [१८]संरम्भात्।
[१९]सेव्योऽत्र निष्परिहृतः कथं नु[२०] दासो निरपराधः ॥७१॥

---

[१] L. स्वागा० [२] A. भग्न० [३] K. L. हता०
[४] K. L. कोऽथ [५] A. K. L. ०क्तिर्यथा
[६] K. L. ०रसना [७] K. L. तस्या प्रम्ल०
[८] A. ०स्तदधि० [९] A. वेशसं, K. वैशशं, L. वैश्यशं
[१०] L. omits अनुस्वार [११] L. नीक्षा (?) [१२] Original वास०
[१३] L. निह्नुपितिपरः [१४] K. L. रुदंत्या [१५] L. अनैनैव
[१६] L. ०नयो [१७] A. सामथा यथा, K. L. साम यथा
[१८] A. विर·········(omits ०म संरम्भात्)
[१९] K. L. सेव्यो जनिष्परिहृतः, A. omits सेव्यो and reads नः प्रहृतं Subhāṣita. 305, 8 reads this verse as follows:—
अपराधी नूनमहं प्रसीद रम्भोरु विरम संरम्भात्।
सेव्यो जनश्च कुपितः कथं नु दासो निरपराधः ॥
[२०] K. L. omit नु



भेदस्तत्सख्युपार्जनम्। यथा—

[१]कृतेऽप्याज्ञाभङ्गे[२] कथमपि [३]मया ते प्रणतयो
धृता[४] गाढं हस्ते विसृजसि [५]कथं सुभ्रु बहुशः।
प्रकोपः कोऽप्यन्यः [६]पुनरयमसीमो विगणिता
हिता यत्र स्निग्धाः[७] प्रियसहचरीणामपि गिरः ॥७२॥

[ Subhāṣita. 306. 46 ]

दानं[८] व्याजेन भूषादेः[९], यथा—

न खलु वयममुष्य दानयोग्याः[१०]
पिबति च पाति च याऽसकौ रहस्त्वाम्।
व्रज विटपममुं[११] ददस्व[१२] [१३]तस्यै
भवतु[१४] यतः सदृशोश्चिराय योगः[१५] ॥७३॥

[ Śiśupāla. VII 53 ]

दानेन मानापनोदनं वेश्यादान-वद्रसाभासो भवेदिति। एतत्केचिन्नेच्छन्ति। +

,[ तत् ]-पादपतनं[१६] नतिः ॥७४॥

सुतनु! [१७]जहिहि [१८]मानं पश्य पादानतं मां
न खलु तव कदाचित् [१९]कोप एवंविधोऽभूत्।
इति निगदति[२०] नाथे तिर्यगामीलिताक्ष्या
नयनजलमनल्पं [२१]मुक्तमुक्तं न किंचित् ॥७५॥

[ Amaru. 39 ]

अत्र नयनजलं मुक्तमिति प्रसादसूचनम्। किञ्चिदिति अनुनयनिर्वेदयोरनुवृत्तिः। अत्र प्रायिकोऽयमपराधः। तेनोभयं संभाव्यते। तथा हि—पादानतं[२२] मां पश्येत्यनुनयः, कृतापराधः पादानतो द्रष्टव्यः, इति निर्वेदः। न खल्विति तावदेवं[२३]-विधोऽपराधोऽस्तीति ध्वनिः, इति क्रोधः ॥

---

[१] K. L. कृतो० [२] L. ०भांगे
[३] A. K. L. मयाऽति (K. L. ०लि) प्रणयतो
[४] Subhāṣita. धृताः स्मित्वा [५] Ibid रुपं
[६] Ibid पुनरयमसीमाद्य गुणितो वृथा यत्र etc.
[७] K. L. omit विसर्ग [८] K. दान, L. दानं
[९] K. L. ०देर्यथा [१०] K. L. omit विसर्ग
[११] L. omits अनुस्वार [१२] L. ०स्वा [१३] K. L. तास्यै
[१४] K. L. भवति [१५] K. L. योग्यः
[१६] L. omits अनुस्वार [१७] K, L. जहहि [१८] Original मौनं
[१९] L. काप [२०] A. निगदित [२१] L. मुक्तं मुक्तं
[२२] L. ०नंतं [२३] L. omits अनुस्वार

उपेक्षाऽ[१]नवधारणम्, यथा—

लिखन्नास्ते भूमिं बहिरवनतः प्राणदयितो
निराहाराः[२] सख्यः सतत-[३]रुदितोच्छूननयनाः ।
परित्यक्तं सर्वं हसितपठितं पञ्जरशुकैः
स्तवावस्था चेयं विसृज कठिने मानमधुना ॥७६॥

[ Amaru. 7 ]

अत्र प्रियस्य चिन्ता-ग्लानिजडतादयः सखीनां संभ्रम[४]-संतापादयः, इयमवस्थेत्युक्ते नायिकाया[५] विषमज्वरादि[६] संलक्ष्यते ॥

मानापनोदनाय रसान्तरं किमित्युक्ते त्रासहर्षौ यथा[७]—

ईर्ष्यावशात् [८]काऽपि विहाय कान्तं वने वसन्ती चपलायताक्षी ।
कदर्थिता [९]धूर्तमधुव्रतेन संभ्रान्तदृष्टिः प्रियमालिलिङ्ग ॥७७॥

[१०]छलादिभिरपि मानोपनोदः । एवं छलादिषूदाहार्यम्[११] ॥

यूनोर्यौवनमत्रोक्तं शृंङ्गारस्यादिकारणम् ।
विशेषतः स्त्रियास्तच्च श्रेष्ठं युवमनोहरम् ॥७८॥

मुग्धं प्रगल्भं मध्यं च [१२]तदनन्तरमित्यपि ।
चतुर्धा गदितं[१३] तच्च तल्लक्षणमथोच्यते ॥७९॥

[मुग्धं यथा—]

प्रगल्भते स्मरो यस्यां युवतौ चित्त [१४]एव हि ।
तत्कालं प्रणयं प्राप्तस्तदुक्तं [१५]मुग्धयौवनम् ॥८०॥

यथाऽऽह भरतः—

त्रस्यत्यङ्गार्पणे वाञ्छत्यलक्ष्यं [१६]चरितं प्रिये ।
[१७]सम्मुखं नेक्षतेऽप्युक्ता सुमुखी [१८]मुग्धयौवने ॥८१॥

यथा--

मन्दमन्दविगलत्त्रपमीपच्चक्षु[१९]-रुन्मिषितपक्ष्म दधत्या ।
वीक्ष्यते स्म शनकैर्नववध्वा कामिनो मुखमधोमुखयैव[२०] ॥८२॥

---

[१] A. त्ववधारणम्, K. L. त्य or (न्य) नवधारणम्
[२] K. L. omit विसर्ग
[३] K. L. ०नयनोद्धूतनयनः
[४] A. adds विसर्ग
[५] L. omits ०या
[६] K. L. ज्वरादयः संलक्ष्यंते
[७] K. L. omit यथा
[८] L. ।कापि (normally L. gives परमात्रा)
[९] A. धूर्त मघुव्रजेन
[१०] L. omits छ०
[११] K. L. ०षूदार्यम्
[१२] K. L. तदनंतमित्यपि
[१३] L. omits अनुस्वार
[१४] L. राव
[१५] A. मध्य०
[१६] A. चरतं
[१७] K. L. सम्मुखे
[१८] A. मध्य०, L. मुग्धा
[१९] L. ०क्षुं (adds अनुस्वार)
[२०] L. ०मुखायेव



प्रगल्भं[१] यथा—

आज्ञापयति राजेव गुरुवच्छास्ति सर्वदा ।
प्रगल्भे[२] यौवने रामा न शक्या समुपासितुम् ॥८३॥

यथा—

दुर्मोहमोहनमहौषधचूर्णचू(पू)र्ण-
सौवर्णकुम्भयुगरम्यकुचौ दधानम् ।
प्रौढं स्फुरत्किमपि यौवनमेतदस्या
न ज्ञायते किमिह वाञ्छति[३] कर्तुमद्य[४] ॥८४॥

मध्यमं यथा —

ताम्बूलचैलवलयैरपि [५]नैति तृप्तिं
कान्तेन निर्दयनखा[६]-हतचित्रिताङ्गी ।
सद्भावभावित-[७]पटूद्भटनिष्ठुरेण
नारी दधौ निधुवने न मनः प्रगाढम् ॥८५॥

तदनन्तरमिति[८] मध्यमादनन्तरं चतुर्थं यथा—

कुचयोः पतने जाते रतिलालसचेतसाम्[९] ।
योषितां लम्बितं [१०]तत्तु यौवनं परिकीर्तितम्[११] ॥८६॥

यथा —

पुत्रि! त्वां [१२]मा विमन्यस्व पतितोर्ध्वकुचां तनुम् ।
भग्नाऽपि शर्करा नूनं प्रीणाति रसनेन्द्रियम् ॥८७॥

॥ इति यौवनचतुष्टयम् ॥

[१३]अष्टावस्थास्तासां स्युः शृंङ्गाररससंश्रयाः ।
स्वाधीनपतिरुत्का च तथा वासकसज्जिता ॥८८॥

[१४]अभिसारिका[१५] खण्डिता विप्रलब्धाऽभिसन्धिता ।
प्रोषितप्रेयसी[१६] चेति क्रमाल्लक्षणमुच्यते ॥८९॥

स्वाधीनपतिका सा तु यां न मुञ्चति वल्लभः ॥९०॥

---

[१] K. L. प्रगल्भत्वं
[२] L. प्रगल्भ०
[३] A. ०सि
[४] L. ०मध्य
[५] A. नेति
[६] L. नहत० (omits ०खा०)
[७] A. ०तरूद्भट०
[८] A. omits ०मिति
[९] L. ०चेतसा
[१०] K. L. तं तु
[११] L. ०तः
[१२] K. L. न
[१३] A. K. L. अष्टावव० (repeat ०व०)
[१४] L. अति०
[१५] A. ०ता
[१६] A. omits ०यसी चेति क्रमाल्०

यथा—

कबरीबन्धनं कुर्वन् रचयन् पत्रमञ्जरीम् ।
एवं विनोदयन्[१] कान्तां छायावदनुवर्तते ॥९१॥

इयं [२]हृष्टा ॥१॥

प्रिये कृतव्यलीके तु [३]विरहोत्कण्ठितोन्मनाः[४] ॥९२॥

यथा—

सखि स विजितो[५] वीणावाद्ये[६] कयाऽप्यपरस्त्रिया
पणितमभवत्ताभ्यां तत्र क्षपा ललितं ध्रुवम् ।
[७]कथमितरथा शेफालीषु[८] स्खलत्कुसुमास्वपि[९]
प्रसरति नभोमध्येऽ-[१०]पीन्दौ प्रियेण विलम्ब्यते ॥९३॥

[ Subhāṣita. 359. 98 ]

इयं [११]च चिन्ताखेदवती ॥२॥

अथ दासकसज्जा—

केलीगृहमथात्मानं मण्डयन्त्येष्यति प्रिये ॥९४॥

यथा—

संप्राप्त-[१२]नेपथ्य-[१३]विधानशोभा केलीगृहे धूपवितानरम्ये ।
उत्कण्ठिता [१४]द्वारनिषण्णदृष्टिः प्रतीक्षते त्वामसितायताक्षी ॥९५॥

॥ इयं च चिन्तात्वरावती ॥३॥

अथाभिसारिका

स्मरार्ताऽभिसरेत्[१५] कान्तं [१६]सारयेद् वाऽभिसारिका ॥९६॥

यथा—

उरसि निहितस्तारो हारः, कृता जघने घने
कलकलवती काञ्ची पादौ रणन्मणिनूपुरौ ।
प्रियमभिसरस्येवं मुग्धे[१७] त्वमाहितडिण्डिमा
यदि किमधिकत्रासोत्कम्पा दिशः[१८] समुदीक्षसे[१९] ॥९७॥

[ Amaru. 31 ]

---

[१] A. omits ०दयन् कान्तां छा० [२] A. looks like हृष्या
[३] K. विरहौ०, L. विरहौत्कंचितौ० [४] A. omits विसर्ग
[५] K. L. ०जिति [६] Subhāṣita. ०वाद्यैः [७] A. कथमकरथा
[८] K. L. ०लिषु [९] L. ०ष्टपि [१०] A. पादौ [११] L. omits च
[१२] L. ०नेपेथ्य० [१३] K. L. विधाशोभा (omit ०न०)
[१४] L. द्वीर० [१५] K. ०सरे, L. ०सार (both omit ०त्)
[१६] K. L. सा(L. सां)रायद् [१७] A. मुग्ध
[१८] L. दिशतः [१९] K. L. ०क्ष्यते



[१]यथा वा—

न च मेऽवगच्छति यथा लघुतां करुणां यथा च कुरुते स मयि ।
निपुणं तथा तमधिगम्य [२]वदेरभिदूति काचिदिति संदिदिशे[३] ॥९८॥

[ Śiśupāla. 9. 56 ]

इयं च नील-[४]पटावगुण्ठिता [५]भीतिसंभ्रमाभियुक्ता वा ॥४॥

अथ खण्डिता—

ज्ञातान्या[६]-सङ्गविकृतौ कान्ते [७]कोपकषायिता ।
[८]गत्वाऽन्यत्रागते कान्ते [९]भोगचिह्नैः कषायिता ॥९९॥

यथा—

[१०]तदवितथमवादीर्यन्मम त्वं प्रियेति
प्रियजनपरिभुक्तं यद्दुकूलं [११]वसानः[१२] ।
मदधि-[१३]वसतिमागाः कामिनां मण्डल(न)श्री-
र्व्रजति हि सफलत्वं वल्लभालोकनेन ॥१००॥

[ Śiśupāla. II 33 ]

॥ इयं [१४]खेदाश्रुरोषवती ॥५॥

अथ विप्रलब्धा—

दूतीमहर्निशं[१५] प्रेष्य[१६] [१७]कृत्वा संकेतकं क्वचित् ।
यां विप्रलभते प्रेयान् विप्रलब्धेति तां विदुः ॥१०१॥

यथा—

उत्तिष्ठ दूति यामो यामो यातस्तथापि [१८]नायातः ।
[१९]मिथ्याप्रलापशीले विश्वासः कुत्र धूर्तेऽस्मिन् ॥१०२॥

[ Quoted in S. D. III 83 ]

॥ इयं वञ्चिता खेदवती ॥६॥

[अथाभिसन्धिता—]

नमन्नपि यथा पूर्वं निरस्तो मन्युना प्रियः ।
तं बिना दुःखिता साऽभिसन्धिता [२०]कीर्तिता यथा ॥१०३॥

---

[१] A. omits यथा वा and the subsequent verse.
[२] K. L. वाद० [३] K. L. ०देशैः [४] A. ०पुटा०
[५] K. L. भातितत्संभ्रमाभि० (L. ०दि०) [६] A. ०न्यं
[७] K. L. कोपुरुषा० (K. indicates the deletion of ॢ mātrā below ०प०) [८] A. omits this line [९] L. भोगे०
[१०] A. तदवितथवदीर्यं मन्मम [११] Original दधानः
[१२] K. L. ०ना [१३] L. ०वसिति०
[१४] A. looks like स्वेदा० [१५] K. L. ०निसं (L. ०स०)
[१६] A. K. L. प्रेक्ष्य [१७] L. कृत्य [१८] A. यामोतः
[१९] Quotation in S. D. reads this line as follows:—
याऽतः परमपि जीवेज्जीवितनाथो भवेत्तस्याः । [२०] L. कीति यथा

यथा—

निःश्वासा वदनं दहन्ति हृदयं [1]निर्मूलमुन्मूल्यते
निद्रा [2]नैति न दृश्यते प्रियमुखं नक्तं दिवं रुद्यते ।
अङ्गं शोषमुपैति पादपतितः [3]प्रेयांस्तदोपेक्षितः
सख्यः कं गुणमाकलय्य दयिते[4] मानं वयं कारिताः[5] ॥१०४॥
[ Amaru. 92 ]

॥ इयं च खेदाश्रुरोषवती ॥७॥

अथ प्रोषितभर्तृका—

दत्वावधिं[6] पतिर्यस्याः कुतश्चित्कारणाद् गतः ।
देशान्तरं [7]तदार्ता सा [8]प्रोषितप्रेयसी यथा ॥१०५॥

[यथा—]

आदृष्टिप्रसरात् प्रियस्य पदवीमुद्वीक्ष्य [9]निर्विण्णया
विश्रान्तेषु [10]पथिष्वहःपरिणतौ ध्वान्ते समुत्सर्पति[11] ।
[12]दत्वैकं सशुचा[13] गृहं प्रति पदं [14]पान्थस्त्रियाऽस्मिन् क्षणे
माभूदागत इत्य-[15]मन्दवलितग्रीवं पुन-[16]र्वीक्षितः(तम्) ।१०६।
[ Amaru. 76 ]

॥ इयं विरहानुभाववती ॥८॥

॥ अथासां सहायिन्यः ॥

प्रवृत्तिकुशला धीरा गूढमन्त्रा [17]दृढप्रिया ।
विषयेष्विङ्गितज्ञा च सुप्रगल्भा सुधीयुता ॥१०७॥

स्वतन्त्रा विधवा दासी दुष्टा [18]प्रव्रजिता सखी ।
मालाकारादिनारी च कार्या दूतीष्टसिद्धये ॥१०८॥

[यथा—] दूती-प्रस्थापनं माघे—

न च मेऽवगच्छति यथा लघुतां करुणां यथा च कुरुते स मयि ।
निपुणं तथैनमधिगम्य वदेरभिदूति काचिदिति संदिदिशे ॥१०९॥
[ Śiśupāla. 9. 56 ]

[1] A. निल्मूर्यं०
[2] K. L. नेति
[3] A. प्रयांस्तदोत्प्रेक्षितः
[4] K. L. दयितं
[5] K. ०ता, L. तां
[6] K. L. omit अनुस्वार
[7] L. omits ०त०
[8] K. L. प्रेषित०
[9] A. निर्वर्णया
[10] L. पथिष्ट०
[11] L. ०पति
[12] A. दत्वौत्कण्ठशुचा गृह
[13] K. L. सशुचां (in L. the ा mātrā of ०च० is not clear).
[14] L. पाथ०
[15] L. ०मद०
[16] L. ०वीक्षि० (omits रेफ)
[17] K. L. दृढि०
[18] A. प्रवर्जिता



[1]लेखोऽत्र मुनिः—

वियोगेऽ-[2]नङ्गलेखस्तु प्रस्थाप्यः[3] प्रीतिसिद्धये ।
[4]प्रयोजने प्रियजनैः साक्षरो वा निरक्षरः ॥११०॥

साक्षरं प्रति भरतः—

केतक्यादेर्दलं पत्रं [5]मषी कस्तूरिकोद्भवा ।
स्तन-[6]चूचकमुद्रा च बन्धनं [7]बिसतन्तुभिः ॥१११॥

निरक्षरो यथा—

निरक्षरस्त्वशोकादिनवपल्लवपत्रकः ।
चन्द्रार्धनखदानाङ्कः[8] सोऽनुरागस्य [9]सूचकः ॥११२॥

[10]माघे यथा—

किसलय-[11]शकले-[12]ष्ववाचनीयाः[13] [14]पुलकिनि केवलमङ्गके निधेयाः ।
नखपद-[15]लिपयोऽपि [16]भावितार्थाः [17]प्रणिदधिरे [18]दयितैरनङ्गलेखाः ॥११३॥
[ Śiśupāla. 7. 39 ]

स्वहस्तो यथा—

तस्यैवेदमिति ज्ञानं यस्मिन् दृष्टे[19] प्रजायते ।
प्रसिद्धिलिपिसंकेतविशेषः स स्वहस्तकः ॥११४॥

तदुक्तम्—

तस्य नो यदि लेखोऽयं स्वहस्तोऽत्र कथं स च[20] ।
तस्मादाश्वसिहि स्नेहादलं खेदैरिह प्रिये ॥११५॥

सख्याभासोदाहरणं यथा—

प्रियसखीसदृश प्रतिबोधिताः[21] [22]किमपि काम्यगिरा परपुष्टया ।
प्रियतमाय वपुर्गुरुमत्सर-च्छिदुरया दुरयाचितमङ्गनाः ॥११६॥
[ Śiśupāla. 6. 8 ]

[1] A. लेखा च
[2] L. ०नगलेपु
[3] K. L. omit विसर्ग
[4] A. प्रि०
[5] L. मंकखी
[6] A. omits ०चूचकमु०
[7] K. L. विश०
[8] A. omits विसर्ग
[9] A. omits सूचकः
[10] A. omits माघे
[11] K. L. ०शयने०
[12] L. ०ष्टवा०
[13] A. omits विसर्ग
[14] A. पुलकितनखस्रवनांगके (?)
[15] A. ०लेपयोपि
[16] Original दीपितार्थाः
[17] A. प्रणधरिपे
[18] A. omits दयितैरनंग०, L. दयिति०
[19] K. omits. ष्टे, L. दृष्टि
[20] K. L. वा
[21] K. L. omit विसर्ग
[22] A. K. L. कमपि

यथा [च]—

परभृता मदनक्षतचेतसः प्रियसखी लघुवागिव योषिताम् ।
प्रियतमानकरोत् कलहान्तरे मृदुरवा दुरवापसमागमान् ॥११७॥

[ अथ संभोगः ]

चतुर्विधः स संभोगोऽनुरागोऽनन्तरस्तथा ।
[1]मानानन्तरकश्चैव प्रवासा-[2]नन्तरकस्तथा ॥
करुणानन्तरश्चेति-[3]च्छिन्नाश्चैते प्रकाशकाः ॥११८॥

प्रागसंगतयोर्यूनोः संकल्पेनैव वर्तते ।
[4]योऽभिलाषः स आद्योऽनुराग इत्यभिविश्रुतः ॥११९॥

[5]आद्यानुरागः संभोगः प्रत्यक्षालोक एव वा ।
स्वप्नालोके [6]तथाऽऽलेख्याऽलोके वाऽथ कथाश्रुतौ ॥१२०॥

प्रेमप्रौढिप्रमारूढमनसोऽहंकृति[ः] प्रिये ।
जाता[7] हेतोरहेतोर्वा स सद्भिर्मान उच्यते ॥१२१॥

देशान्तरादिभिर्यूनोर्व्यवधानं चिराय यत् ।
नवेऽनुरागे प्रौढे वा प्रवासः सोऽभिधीयते ॥१२२॥

प्रेयसोऽत्यन्तविच्छेदादधिभारोरुपीडया ।
मितरागो मितः [8]खेदः करुणः[9] स इहोच्यते ॥१२३॥

[10]इतीहाद्यनुरागादिचतुर्णां लक्षणानि च ।
वात्स्यायनो[11] मुनिः [12]प्राह भरतादिमताश्रयात् ॥१२४॥

[13]नवो नव इवोदेति संभोगोऽनन्तरो हि यः ।
[14]स चेतःप्रीतये चन्द्रः परिमुक्तो घनैरिव ॥१२५॥

प्रकाशो यथा

सस्वजे[15] [16]प्रियमुरोनिपीडिता प्रार्थितं मुखमनेन नाहरत्[17] ।
मेखला प्रणय-[18]लोलतां गतं हस्तमस्य शिथिलं रुरोध सा ॥१२६॥
[ Kumāra. 8. 14 ]

[1] A. omits this line. [2] L. ०नांतर० [3] A. छन्ना०
[4] K. L. omit this line. [5] K. L. अद्या० [6] L. तलोख्या०
[7] A. जातो [8] A. K. L. स्वेदः [9] L. adds सरुणः after करुणः
[10] K. L. इति० [11] K. L. ०यिनो [12] L. प्रह
[13] L. ववो [14] L. से चत्ः [15] K. L. ०जैः
[16] K. L. प्रिया० [17] A. ०रेत् [18] L. तोलतां



प्रच्छन्नो यथा —

[1]नेतिवारितगिरां कुलटानां [2]श्वासनिःसरणवीक्षणभाजाम् ।
प्रीतये लघुरतानि यथा सा कामिनी न च [3]तथा चकमे च[4] ॥१२७॥

मानानन्तरप्रकाशो [5]यथा—

एकस्मिञ्शयने पराङ्मुखतया वीतोत्तरं ताम्यतो-
रन्योन्यं [6]हृदि संस्थितेऽ-[7]प्यनुनये [8]संरक्षतोर्गौरवम् ।
दम्पत्योः [9]शनकैरपाङ्गवलनान्मिश्रीभवच्चक्षुषो-
र्भग्नो मानकलिः [10]सहासरभसं [11]व्यासक्तकण्ठग्रहः ॥१२८॥
[ Amaru. 23 ]

तथाऽयं प्रच्छन्नो यथा

तां [12]मत्तालिततिच्छन्ना[13]-[14]मनाशङ्कितकानने ।
परात्मपरिहारेण नरो नारीमरीरमत् १२९॥

प्रवासानन्तरं[15] प्रकाशो यथा

सुप्ते चिरागतः प्रेयान् प्रवासद्विगुण[16]-स्पृहम् ।
अहो(ह)रन्तरहो भेजे यत्तन्व्यास्तानवं मनः ॥१३०॥

करुणानन्तरप्रकाशो यथा —

भूयो बभूव संभोगः[17] कालेन बहुना रसात् ।
रतिकन्दर्पयोर्योगो[18] रतिकन्दर्पयोरिव ॥१३१॥

तथा [19]प्रच्छन्नो यथा—

प्रियां [20]प्रविश्य ज्वलनं विनिर्गतां विलोक्य रामः करुणाधिकस्पृहः ।
तदङ्गसंतापनिरूपणच्छलात् करेण पस्पर्श कुचौ यदृच्छया ॥१३२॥

संभोगो यो भवेत्तिर्यक्-पशु-[21]पक्षि महीरुहाम् ।
[22]संभोगाभास इत्युक्तः स पुनर्मुनिपुङ्गवैः ॥१३३॥

[1] A. नति० [2] K. L. आस० [3] L. कथा
[4] K. वा, L. व [5] L. omits यथा
[6] Original हृदयस्थिते० [7] K. omits ०ते०, L. ०तो०
[8] K. L. संरक्षते यौवनं [9] L. शनाको०
[10] A. सहाररसन, K. L.० कलिर्महान् सरभसं (L. सरंस)
[11] Original व्यावृत्त० [12] A. मतालितछनामम्नाशंकित०
[13] K. L. add अनुस्वार [14] K. L. ०मनासंकित०
[15] K. ०नंतर, L. ०नंत [16] A. ०गुणं (adds अनुस्वार)
[17] K. L. omit विसर्ग [18] L. ०र्गो [19] L. प्रयन्नो
[20] A. प्रवेश्य [21] L. ०पर्क्ष० [22] K. L. संभोगो०

[1]तत्र तिरश्चां यथा—

[2]मधुद्विरेफः कुसुमैकपात्रे[3]-[4]पपौ प्रियां स्वामनुवर्तमानः ॥१३४॥

पशूनां यथा—

शृङ्गेण च स्पर्शनिमीलिताक्षी[5]-र्मृगीरकण्डूयत कृष्णसारः ।
[6]ददौ [7]सरःपङ्कजरेणुगन्धि-गजाय गण्डूपजलं[8] करेणुः ॥१३५॥

पक्षिणां यथा—

अर्धोपभुक्तेन [9]बिसेन जायां संभावयामास रथाङ्गनामा ॥१३६॥

[ Subhāṣita. 331. 31, 32 ]

महीरुहां यथा—

पर्याप्तपुष्पस्तबकस्तनी(ना)भ्यः स्फुरत्प्रवालौष्ठमनोहराभ्यः ।
लतावधूभ्यस्तरवोऽप्यवापुर्विनम्रशाखा-[10]भुजबन्धनानि ॥१३७॥

[ Subhāṣita. 331. 34 ]

यत्रानुकूलावन्योन्यं निषेवेतां विलासिनौ ।
दर्शनस्पर्शनादिभ्यः संभोगो हृष्टयोर्मतः ॥१३८॥

यथा—

[11]एकान्ततस्त्ववनिषक्त इवावपीड्य
निर्भुग्नतुङ्गकुचकुड्मलया [12] तया मे ।
कर्पूरहारहरिचन्दन-चन्द्रकान्त-[13]
[14]निःस्पन्दसीकर-मृणाल-[15]हिमाद्रिवर्गः ॥१३९॥

जगच्छृङ्गारहारेण शृङ्गारो हरतुष्टये ।
साङ्गोपाङ्गै-[16]रुदाहारि हारि-[17]सद्धर्मवर्गणैः ॥१४०॥

इति श्रीराजाधिराज-[18]कालसेनमहीमहेन्द्रेण विरचिते संगीतराजे षोडशसाहस्र्यां संगीतमीमांसायां [19]रसरत्नकोशे विभावोल्लासे [20]नायिकालक्षणं साङ्गशृङ्गारवर्णनं नाम द्वितीयं परीक्षणं समाप्तम् ॥

[1] K. L. तत्तिरश्चां [2] K. L. मधु: [3] K. L. ०पात्रै
[4] L. पापौ [5] K. L. ०ताक्षीं, A. K. L. ०मृगी०
[6] L. दादो [7] A. रसः [8] L. omits अनुस्वार
[9] K. L. विशेन [10] A. omits ०भुजबंधना०
[11] A. एकीकृतस्त्ववनि⋯⋯निर्भुग्न etc., L. एकान्ततस्त्रविनिपक्त०
[12] A. ०कुड्मलताय यामे [13] A. adds विसर्ग
[14] A. निस्पन्द [15] A. ०हिमार्द्र, K. L. ०हिमादि०
[16] L. ०रुहाहारै [17] A. सद्वर्ग
[18] K. L. श्रीकुम्भकर्णेन [19] K. L. omit रस०
[20] A. adds नायक० नायिकावर्णनं (omits साङ्गशृङ्गारवर्णनं)

## चेष्टादिविभावनं नाम तृतीयं परीक्षणम्

भस्मसाद्येन रुष्टेन कामोऽकारि यदृच्छया ।
तुष्टेन तु पुनर्येन जीवितः सोऽ-[1]वताच्छिवः ॥१॥

अथो विभावा वक्ष्यन्ते क्रमादा-[2]लम्बनादयः ।
[3]ज्ञायमानतया तत्र विभावो रसपोषकृत् ॥२॥

स द्विधाऽऽलम्बनाख्यश्च तथैवो-[4]द्दीपनाभिधः ।
[5]तत्र त्वालम्बनं यत्र रसो यद्विषयो भवेत् ॥३॥

[6]शृङ्गारे नायिकाद्यास्तु [7]रौद्रे वैरिमुखास्तथा ।
विविच्य तत्र वक्ष्यन्ते शृङ्गारस्य विभावकाः ॥४॥

[यथा—]

अस्याः[8] सर्गविधौ प्रजापतिरभूच्चन्द्रो नु कान्तिप्रदः
शृङ्गारैकरसः स्वयं तु मदनो मासो [9]नु पुष्पाकरः ।
[10]वेदाभ्यासजडः कथं नु विषयव्यावृत्तकौतूहलो
निर्मातुं[11] प्रभवेन्मनोहरमिदं रूपं पुराणो मुनिः ॥५॥

[ Vikramo. 1. 10 ]

॥ इत्यालम्बनविभावः ॥

चित्ते स्वप्नेऽथवा साक्षात्तज्ज्ञानं [12]श्रवणेन वा ।
तदन्यरससंपोषकृत् [13]स्यादुद्दीपनाभिधः ॥६॥

आलम्बनगुणाश्चैव तच्चेष्टा[14] तदलंकृतिः ।
तटस्थश्चेति विज्ञेयः[15] स चतुर्धा[16] बुधैरिह ॥७॥

रूपयौवनलावण्य-मुखमालम्बनं मतम् ॥८॥

[1] A. ०वतात् शिवः, K. L. ०वताच्छिवः
[2] L. ०लंच्छनादयः [3] A. ज्ञान०
[4] L. ०द्दीपनानिः [5] K. L. तत्रालम्बनं
[6] A. शृङ्गारैर्नायिका०, K. शृङ्गारनायका०, L. शृङ्गारनायिका०
[7] A. रौद्रवीर०, L. रौद्रैवैरि० [8] A. omits विसर्ग
[9] L. लु [10] L. वैदा०
[11] L. omits अनुस्वार [12] K. L. प्रवणेन
[13] K. L. स्यदु० [14] K. L. ०ष्ट
[15] K. L. ०या [16] K. चतुद्धा

तत्र—

स्तनतटमतीव तुङ्गं निम्ना[१] नाभिः समुन्नतं [२]जघनम् ॥९॥

[३][ Sūktimuktā. 53. 96; quoted in Daśa. II 18 ]

इत्यादि यौवने । लावण्यं यथा—

सुन्दरी वा न वेत्येष विवेकः केन जायते ।
[४]प्रभामात्रं हि तरलं दृश्यते न तदाश्रयः ॥१०॥

चेष्टा द्विधा–यौवनप्रभवभावहावादि-परिगतरसस्तदनुभावश्चेति । तत्र प्रथमो यथा—

अत्रान्तरे किमपि वाग्विभवातिवृत्त[५]-
वैचित्र्यमुल्लसित-[६]विभ्रममायताक्ष्याः ।
तद्भूरिसात्त्विकविकार-[७]मपास्तधैर्य-
माचार्यकं[८] किमपि[९] मान्मथमाविरासीत् ॥११॥

[ Mālatī. 1. 29 ]

इति चेष्टा । [१०]द्वितीयस्तु प्रायेण स्त्रीष्वेव वर्ण्यते ।

भावो हावश्च हेला च माधुर्यं धैर्यमित्यपि ।
लीलाविलासो विच्छित्ति-[११]विभ्रमः किलकिञ्चितम् ॥१२॥

[१२]मोट्टायितं कुट्टमितं [१३]विब्बोको ललितं तथा ।
कुतूहलं च चकितं विहृतं हास इत्यपि ॥१३॥

[अथ हावभावौ हेला च—]

तत्र यद्रसविज्ञानं भावः [१४]सोऽभिमतः सताम् ॥१४॥

स एव भावः किंचिच्चेल्लक्ष्यतेऽत्र विकारवान् ।
स एव हेलासंज्ञः स्यात् सुव्यक्तं विकृतो यदि ॥१५॥

---

[१] K. L. निम्नो
[२] L. जयतं
[३] The reading in these texts is as follows:—
स्तनतटमिदमुत्तुङ्गं निम्नो मध्यः समुन्नतं जघनम् ।
[४] A. प्रभावमात्रं
[५] A. K. L. ०वृत्ति०
[६] K. L. चित्रभ्रमायताक्ष्याः
[७] L. ०मास्त०
[८] L. omits अनुस्वार
[९] Original विजयि०
[१०] L. omits द्वितीयस्तु
[११] A. K. L. omit रेफ on वि०
[१२] L. मोदा०
[१३] L. विछोको
[१४] L. omits सोऽभिमतः and reads सातां for सताम् ।



तत्र हावभावौ यथा—

दृष्टिः सालसतां बिभर्ति न[१] शिशुक्रीडासु बद्धादरा
कर्णौ [२]प्रेरयति प्रवर्तितसखीसंभोगवार्तास्वपि ।
[३]पुंसामङ्कमपेतशङ्कमधुना नारोहति प्राग्यथा
बाला [४]नूतनयौवन-[५]व्यतिकरावष्टभ्यमाना शनैः[६] ॥१६॥

[ Quoted in Daśa. II. 16, 33 ]

॥ इति [७]हावभावौ ॥

हेला यथा—

अलसवलितैः प्रेमार्द्रार्द्रैर्मुहुर्मुकुलीकृतैः
क्षण-[८]मभिमुखैर्लज्जालोलैर्निमेषपराङ्मुखैः ।
हृदयनिहितं भावाकूतं वमद्भिरिवेक्षितैः[९]
कथय सुकृती कोऽयं मुग्धे त्वयाऽद्य विलोक्यते ॥१७॥

[ Amaru. 4 ]

॥ इति हेला ॥

अथ माधुर्यम्—

[१०]अभूषणेऽपि रम्यत्वं माधुर्यमिति गीयते ॥१८॥

यथा—

सरसिजमनुविद्धं शैवलेनापि रम्यं
मलिनमपि हिमांशोर्लक्ष्म लक्ष्मीं तनोति ।
इयमधिकमनोज्ञा वल्कलेनापि तन्वी
किमिव हि मधुराणां मण्डनं नाकृतीनाम् ॥१९॥

[ Śākuntalam 1. 20 ]

॥ इति माधुर्यम् ॥

[११]अथ धैर्यम्—

शीलानुल्लङ्घनं धैर्यं कीर्त्यतेऽत्र मनीषिभिः ॥२०॥

यथा—

ज्वलतु गगने [१२]रात्रौ रात्रावखण्डकलः[१३] शशी
दहतु[१४] मदनः किं वा मृत्योः[:] परेण [१५]विधास्यते(तः) ।
मम तु दयित[:]श्लाघ्यस्त[ा]तो जनन्यमलान्वया[१६]
कुलममलिनं न त्वेवायं जनो न च जीवितम् ॥२१॥

[ Mālatī 2. 2 ]

॥ इति [१७]धैर्यम् ॥

---

[१] A. च
[२] Quotation in Daśa. प्रेषयति
[३] K. L. पुंसोप्यंक० (L. ०मपेत्)
[४] L. भूतन०
[५] L. व्याति०
[६] L. omits विसर्ग
[७] A. हासः, K. L. हावः (omit ०भावः)
[८] L. ०मपि०
[९] Original ०रिवेक्षणैः
[१०] A. आभू०, L. अभूपणोऽपि
[११] K. L. omit अथ धैर्यम्—
[१२] K. L. omit रात्रौ
[१३] K. L. खंडलः
[१४] A. omits ०तु मदनः किं वा मृ०
[१५] L. कि०
[१६] A. ०लालया, K. L. ०लातया
[१७] A. दैर्घ्यम्

अथ लीला—

लीला [१]प्रियानुकरणं [२]वाग्भिर्गत्याऽथ चेष्टितैः ॥२२॥

यथा—

इयं चेष्टानुरागेण [३]तथाऽनुकुरुते प्रियम् ।
मुक्तासूयं सपत्न्योऽपि[४] वीक्षन्ते सस्पृहं यथा ॥२३॥

॥ इति लीला ॥

अथ विच्छित्तिः[५]—

स्तोकभूषणयोगेन विच्छित्तिरतिरम्यता[६] ।
भूषणानादरो वाऽपि विच्छित्तिरिति केचन ॥२४॥

यथा—

अङ्गानि चन्दनरजःपरिधूसराणि [७]ताम्बूलरागसुभगोऽ[८]धरपल्लवश्च ।
अच्छाञ्जने [९]च नयने वसनं तनीयः कान्तासु भूषणमिदं [१०]विभवस्तु शेषः ॥२५॥

[ Quoted in S. K. V 154 ]

॥ इति विच्छित्तिः ॥

अथ विलासः—

तात्कालिको विकारः[११] स्याद्दयिता-[१२]लोकनादिषु ॥२६॥

यथ—

अत्रान्तरे किमपि वाग्विभवातिवृत्त[१३]-वैचित्र्यमुल्लसितमित्यादि ॥

[ Mālatī 1. 29 ]

[ ॥इति विलासः॥ ]

अथ विभ्रमः—

विभ्रमस्त्वरया काले भूषास्थानविपर्ययः ॥२७॥

अभ्युद्गते[१४] [१५]शशिनि पेशल-[१६]कान्तदूती[१७]-
संलापसंवलितलोचनमानसाभिः ।
अग्राहि मण्डनविधिर्विपरीतभूषा[१८]-
विन्यासहासितसखीजनमङ्गनाभिः ॥२८॥

[ Quoted in Daśa. II 38 ]

॥ [१९]इति विभ्रमः ॥

---

[१] L. प्रया० [२] A. वाग्निगत्यर्थ०
[३] K. L. तवा० [४] A. ०वि
[५] L. ०क्तिः [६] A. K. L. add यथा after ०रम्यता
[७] L. ताबूल० [८] L. ०धस्प०
[९] K. L. न [१०] L. विभस्तु (omits ०व०)
[११] A. L. omit विसर्ग [१२] L. ०लोकाना०
[१३] A. K. L. ०वृत्ति० [१४] A. K. L. ०द्गमे
[१५] L. शिशिनि [१६] A. कान्ति०
[१७] A. K. L. ०दूत० [१८] A. भूयो० [१९] K. L. omit इति



अथ किलकिञ्चितम्—

क्रोधाश्रुहर्षभीत्यादेः संकरः किलकिञ्चितम् ॥२९॥

यथा—

पाणिपल्लवविधूननमन्तःसीत्कृतानि नयनार्धनिमेषाः ।
योषितां रहसि गद्गदवाचा-मस्त्रतामुपययुर्मदनस्य ॥३०॥

[ Kirāta. 9. 50 ]

अथ मोट्टायितम्—

मोट्टायितं च [१]तद्भावसूचनेष्टकथादिषु ॥३१॥

[यथा—]

[२]चित्रवर्तिन्यपि नृपे [३]सत्त्वावेशिनि चेतसि ।
[४]व्रीडावनमितं—चक्रे [५]मुखेन्दुं विवशेव सा ॥३२॥

[ Quoted in Daśa. II. 40 ]

[यथा वा—]

[६]स्मरदवथुनिमित्तं [७]गूढमुन्नेतुमस्याः
सुभग [८]तव कथायां प्रस्तुतायां सखीभिः ।
[९]भवति विततपृष्ठोदस्तपीनस्तनाग्रा
[१०]ततवलयितबाहु-[११]र्जृम्भितैः साङ्गभङ्गैः[१२] ॥३३॥

[ Ibid. ]

॥ इति मोट्टायितम् ॥

अथ [१३]कुट्टमितम्—

अधरपीडनादौ [१४]सुखवद्दुःखोपचारः कुट्टमितम् ॥३४॥

रत्यादौ [१५]प्रियमर्देऽपि रतिवृद्धिर्निरन्तरा ॥३५॥

द्वितीयः स्पष्टः । आद्यो यथा—

[१६]दष्टमुक्तमधरोष्ठमम्बिका वेदनाविधुत-[१७]पाणिपल्लवा ।
शीतलेन निरवाप तत्क्षणं मौलिचन्द्रशकलेन[१८] शूलिनः ॥३६॥

[ Kumāra. 8. 18 ]

॥ इति कुट्टमितम् ॥

---

[१] L. तद्भातशयनेष्ट० [२] A. K. L. चित्रवृत्तिन्यपि
[३] Quotation in Daśa तत्त्वावेशेन [४] Ibid. व्रीडार्धवलितं, K.L. व्रीडावर्नातं
[५] Ibid. मुखेन्दुमवशैव, A. L. मुखेन्दु (omit अनुस्वार)
[६] A. K. L. स्मरदवमनिमित्तं [७] K. L. मूढ० [८] A. बत
[९] A. K. L. वदति विनय (A. ०त०) पृष्ठोदत्त(A. ०स्त०)पीनस्तनासौ
[१०] A. K. L. नत० [११] A. K. L. omit विसर्ग
[१२] K. L. ०भगैः [१३] K. L. कुट्टिमम्
[१४] K. L. दुःखेऽपि सुखवदुपचारः (L. ०राः) [१५] K. L. प्रियविमर्देपि
[१६] A. दत्तभुक्तमधुरोष्ट०, L. दष्टमुक्तधरोष्ट०
[१७] Original हस्त० [१८] K. repeats ०न

अथ विब्बोकः—

[१]गुर्वाभिमानादिष्टेऽपि विब्बोकोऽ-[२]नादरक्रिया ॥३७॥

यथा—

यासां सत्यपि [३]सद्गुणानुसरणे दोषानुवृत्तिः परा
याः प्राणान् परमर्पयन्ति न पुनः संपूर्णदृष्टिं प्रिये ।
अत्यन्ताभिमतेऽपि वस्तुनि विधिर्यासां निषेधात्मक-
स्तास्त्रैलोक्यविलक्षणप्रकृतयो वामाः[४] प्रसीदन्तु नः ॥३८॥

[ Quoted in S. D. III 100 ]

॥ इति विब्बोकः ॥

अथ ललितम्—

सुकुमाराङ्गविन्यासो मसृणो ललितं भवेत् ॥३९॥

यथा—

[५]सभ्रूभङ्गं करकिसलया-[६]वर्तनैरालपन्ती
[७]सा पश्यन्ती ललितललितं [८]लोचनस्याञ्चलेन ।
विन्यस्यन्ती चरणकमले लीलया स्वैरयातै-
र्निःसंगीतं प्रथमवयसा नर्तिता[९] पङ्कजाक्षी ॥४०॥

[ Quoted in Daśa. II. 41 ]

॥ इति ललितम् ॥

अथ कुतूहलम्—

कुतूहलं रम्यदृष्टौ चापलं परिकीर्तितम् ॥४१॥

यथा—

प्रसाधिकालम्बितमग्रपाद-माक्षिप्य काचिद् द्रवरागमेव ।
उत्सृष्टलीलागतिरा[१०]-गवाक्षादलक्तकाङ्कां पदवीं ततान ॥४२॥

[ Raghu. 7. 7 ]

॥ इति कुतूहलम् ॥

अथ चकितम्—

चकितं भयसंभ्रमः[११],………। यथा—

त्रस्यन्ती [१२]चलशफरीविघट्टितोरु-
र्वामोरुरतिशयमाप विभ्रमस्य ।
[१३]क्षुभ्यन्ति प्रसभमहो विनाऽपि हेतो-
र्लीलाभिः किमु सति कारणे रमण्यः[१४] ॥४३॥ [ Śiśu. 8. 24 ]

॥ इति चकितम् ॥

---

[१] A. गर्वोऽभिमानदष्टेऽपि [२] L. ०नारद० [३] K. L. यद्०
[४] K. L. omit विसर्ग [५] A. सा [६] A. ०न्रर्तनै०, K. L. ०नर्तनै०
[७] A. K. L. सं० [८] K. L. लोचनाभ्यां चलेन
[९] A. adds अनुस्वार [१०] A. ०गवक्षादा० [११] K. L. ०मो
[१२] A. K. चलफरी, L. चलफलंरी
[१३] A. omits this line and the next one. [१४] L. रण्यः



अथ विहृतम्—

प्राप्तकालं न यद् ब्रूयात् कुर्याद् वा विहृतं तु तत् ॥४४॥

यथा—

पत्युः शिरश्चन्द्रकलामनेन स्पृशेति सख्या परिहासपूर्वम् ।
सा रञ्जयित्वा चरणौ [१]कृताशीर्माल्येन तां निर्वचनं जघान ॥४५॥

[ Kumāra. 7. 19 ]

॥ इति विहृतम् ॥

अथ हसितम्—

आकस्मिकं[२] तु हसितं यौवनादिविकारजम् ॥४६॥

यथा—

अकस्मादेव तन्वङ्गी जहास यदियं पुरः ।
नूनं प्रसव-[३]बाणोऽस्यां स्वाराज्यमधितिष्ठति ॥४७॥

[ Quoted in S. D. III 109 ]

॥ इति हसितम् ॥

अथालंकृतिः—

माल्यवस्त्रे भूषणं च [४]मदश्चन्दन[५]-धूपने ।
स्नानसंभोगचिह्ने च पत्रभङ्गक्रियादयः ॥४८॥

एते कवित्वप्रसिद्धत्वान्नोदाहृताः ॥

अथ तटस्थाः[६]—

चन्द्रोदयो[७] घनध्वान[ः] कोकिलारणितं मधु ।
वनानि [८]चाथ केयूरकेलि[९]-[१०]भृङ्गरवादयः ॥४९॥

[११]केलीगृहाणि ऋतवः स्रक्चन्दनविलेपने[१२] ।
दुग्धशीताम्बु-[१३]ताम्बूल-दूतीसंलापनादयः ॥५०॥

[१४]यद्गुणग्राममाकर्ण्य [१५]द्वेष्या अपि नृपात्मजाः ।
अनुभावाननु-[१६]भवन्त्यनेकान् कामविह्वलाः ॥५१॥

इति [१७]श्रीराजाधिराज-कालसेन-महीमहेन्द्रेण विरचिते संगीतराजे षोडशसाहस्र्यां संगीतमीमांसायां रसरत्नकोशे विभावोल्लासे चेष्टादि-विभावनं नाम तृतीयं परीक्षणं समाप्तम् ॥

---

[१] K. L. कृतासी० (or ०मी०) [२] A. omits ०स्मिकं तु हसितं
[३] A. ०वाणौ, L. प्रसवाणौ [४] A. दमश्चंदनभूषणे [५] L. ०दनं
[६] K. L. omit विसर्ग [७] K. L. ०दये [८] K. L. चाप्यः
[९] K. L. ०केचिद् [१०] A. शृङ्गा० [११] A. केलि०
[१२] A. ०पनैः [१३] L. omits ०ताम्बू०
[१४] K. L. सद्० [१५] L. द्वैप्या
[१६] L. omits ०भ० [१७] K. L. श्रीमहीमहेन्द्रश्रीकुम्भकर्णविरचिते

# उद्दीपनविभावनाम चतुर्थं परीक्षणम्

साक्षादिव तटस्थोऽपि यो भोगान् भोगिभूषणः ।
भुङ्क्ते[1] विद्योपधि-[2]च्छिन्नस्तं नमामि महेश्वरम् ॥१॥

अथ तटस्थान्[3] विभावानाह—

रम्यं हर्म्यं वपुः शोभा कलानां कौशलं रतिः ।
ताम्बूलमनुलेपश्च गन्धधूपावृतुर्घनः ॥२॥

चित्रं वासो जलक्रीडा वनं चैव निशाकरः ।
मेघध्वनिस्तथा विद्युद्भृङ्गकोकिलकूजनम् ॥३॥

नेपथ्यं सीधुपानं च दीपकोपौ च मारुतः ।
[4]उपकारो रहःस्थानं पुष्पमालामुखा[5]-स्तथा ॥४॥

भावयन्ति रसं यस्मात्तस्मादेते विभावकाः ॥५॥

तथा च [6]काव्यादर्श—

*विभावेन विना यस्मान्न रतेरुद्भवः क्वचित् ।
रतिं विना न शृङ्गारस्तस्मान्मूलममी स्मृताः[7] ॥६॥

रतेरुत्पत्तये यस्माद् विभावा आदिकारणम् ।
[8]तच्छृङ्गारमये काव्ये वर्णनीयाः कवेरमी ॥७॥

एषां क्रमेणोदाहरणान्याह—

रम्यं हर्म्यं यथा—

शुचि[9] साधु विश्रुतमुदग्रतयाऽपजहार हारि सजने[10] न यदि ।
अपि योपितः सपदि मानधनं न मुदे तदा किमिव हर्म्यमिदम् ॥८॥

॥ इति हर्म्यम् ॥

अथ वपुःशोभा यथा—

सर्वोपमा-द्रव्यसमुच्चयेन यथाप्रदेशं विनिवेशितेन ।
सा निर्मिता विश्वसृजा प्रयत्नादेकस्थ[11]-सौन्दर्यदिदृक्षयेव ॥९॥

[ Kumāra. 1. 49 ]

॥ इति वपुःशोभा ॥

---

[1] A. भुंक्तो [2] K. L, ०छन्न० [3] K. L. ०स्थान
[4] L. उद्य [5] A. adds अनुस्वार [6] K. L. काव्यो०
* This verse is not available in Daṇḍin's Kāvyādarśa.
[7] K. L. omit विसर्ग [8] A. K. तत् शृङ्गार०, L. तत शृङ्गार०
[9] K. L. शुचिःसाधुवि० [10] A. सहजेन [11] L. ०स्था०



[1]अथ कलाकौशलं [2]यथा—

अहो किमपि ते हारि [3]कलाकेलिषु कौशलम् ।
स्मरन्ती यस्य साद्यापि न क्वाप्यन्यत्र रज्यति ॥१०॥

॥ इति कलाकौशलम् ॥

अथ ताम्बूलं यथा—

सौरभ्यगम्भीरमनोहराणि सद्यो रतेरुत्सवदोहदानि ।
[4]कान्तस्य ताम्बूलरसामृतानि संसृज्य काचिज्जगृहे मुखानि ॥११॥

॥ [5]इति ताम्बूलम् ॥

अथानुलेपो[6] यथा —

अनसूयानिसृष्टेन पुण्यगन्धेन काननम् ।
सा चकाराङ्गरागेण पुष्पोच्छ्व[ा]सितषट्पदम् ॥१२॥

॥ [7]इत्यनुलेपः ॥

गन्धो यथा—

स्नानार्द्रमुक्तेषु[8] [9]सुगन्धिवासैर्विन्यस्तसायन्तन-मल्लिकेषु ।
कामो वसन्तात्यय-मन्दवीर्यः केशेषु [10]लेभे बलमङ्गनानाम् ॥१३॥

[ Raghu. 16. 50 ]

[ ॥इति गन्धः॥ ]

धूपो यथा—

धूपो नानाविधः[11] सोऽथ (सौध-?) [12]मुखकेशाङ्गवासनः[13] ।
निद्राविद्रावि-[14]कामस्य कथ्यते सिद्धमौषधम् ॥१४॥

तत्र सौध-[15]धूपो यथा—

सौधेषु धूपलहरी मरुतोत्तरङ्गा-
त्तुङ्गा [16]विभाति शिखरोपरि विस्फुरन्ती ।
नीलच्छविः स्मरनृपस्य [17]निशाजनन्याः[18]
प्रत्यागमोत्सव इवोद्धृतवैजयन्ती ॥१५॥

केशादिधूपो यथा—

केशेषु वस्त्रे वदने [19] वराङ्गे वपुष्यजृम्भन्त विलासिनीनाम्[20] ।
धूमोर्मयः[21] संप्रति सायमन्त-र्निर्वापमानानलधूमवासः ॥१६॥

[ ॥इति धूपः॥ ]

---

[1] K. L. omit अथ [2] A. omits यथा [3] K. L. रति०
[4] K. L. कान्तास्य [5] K. L. omit इति etc.
[6] A. ०लेपः [7] K. L. omit इत्यनुलेपः
[8] Original ०मुक्तेष्वनुधूपवासं [9] L. सुगन्धै० [10] L. omits ले०
[11] A. ०धैः [12] K. L. मुख्य० [13] L. वाः
[14] A. कारस्य [15] L. ०सूपो [16] A. विभर्ति
[17] L. शिशा० [18] A. ०नन्यः, K. L. ०नन्या
[19] L. ०नै [20] L. ०निनाम् [21] L. ० याः

**अथ ऋतुर्वसन्तो यथा—**

उद्घोषन्ति च मङ्गलानि मधुकृत्-संदोहनान्दीकरां
कल्याणीमृच[१]-मुद्धरन्ति परितस्तुष्टान्यपुष्टद्विजाः ।
विष्वग्विस्तृत[२]-[३]पुष्पशालकुटज-व्याजाच्चतुष्कावली-
मातन्वन्ति [४]वसन्तभूभृदुदये[५] स्मेरा वनालिश्रियः ॥१७॥

[६]किंशुककुसुमज्वलनं मदनाग्निष्टोम-मन्दिरे विपिने ।
[७]ज्वलयति मधुयजमानः [८]परभृतजुष्टेन मन्त्रेण ॥१८॥

**घनो यथा—**

यन्निर्वर्त्य-[९]घनागमोदयफलं वाचंयमत्वं[१०] व्रतं
का(गा)यन्ति [११]द्विजकाः [१२]स्वजात्युदयिनीमुच्चै [१३]रुचिं दर्दुराः ।
यन्नृत्यन्ति च [१४]केकिनस्तदुदयो जातः सखि प्रावृष-
[१५]स्तत्किं सीदसि नाधुनापि पथिकस्ते दुर्लभो वल्लभः ॥१९॥

[ ॥इति ऋतुः॥ ]

**[१६]चित्रं वासो यथा—**

निजभूषणोरुकुरुबिन्दरुचा-[१७]मतिरागितामजनयन्नपरम् ।
तरुणारुणाक्त[१८]-वसनं सुदृशामपि [१९]कामुकस्य हृदयेषु भृशम् ॥२०॥

[ ॥इति चित्रं वासः॥ ]

**जलक्रीडा यथा—**

यौवनोन्नतविलासिनीस्तनक्षोभलोलकमलाश्च दीर्घिकाः[२०] ।
गूढमोहनगृहास्तदम्बुभिः स व्यगाहत [२१]विगाढमन्मथः ॥२१॥

[ Raghu. 19. 9 ]

**वनक्रीडा यथा—**

मञ्जुमञ्जुविभवैः सहकारः कान्तकोपकुसुमैश्च मधूकः[२२] ।
[२३]केसरोऽभिनवकेशरजालैर्जानकीमुदमतीव ततान ॥२२॥

[इति वनक्रीडा]

---

[१] K. L. ०मृद०
[२] A. K. ०विसृत०
[३] K. L. ०पुल्ल०
[४] A. omits ०तभूभृदुदये
[५] L. ०दयो
[६] L. किंशुक०
[७] L. ज्वलल्यति
[८] K. L. परभृतहुंहुंकृतेन
[९] K. L. ०यनागमोदय०
[१०] K. L. omit अनुस्वार
[११] K. L. omit द्वि०
[१२] L. स्वजा-दयिनी (omits ०त्य०)
[१३] A. रवैर्दर्दुराः
[१४] A. केचन०
[१५] K. L. ०स्तत्रासी दशना घुनापि(?)
[१६] A. चित्रा
[१७] A. omits ०मति०
[१८] K. L. ०रुणाग्र
[१९] A. कामुकहृदयेषु
[२०] K. L. omit विसर्ग (L. ०र्घीका)
[२१] A. विगूढ०
[२२] A ०कम्
[२३] K. L. केसरोतिनवकेसर०



**निशाकरो यथा—**

ककुभां मुखानि सहसोज्ज्वलयन् दद(ध)दाकुलत्वमधिकं रतये ।
अदिदीपदिन्दुरपरो दहनः कुसुमेषुमत्रिनयनप्रभवः ॥२३॥

[Śiśupāla. 9. 42]

[इति निशाकरः]

**मेघध्वनिर्यथा—**

पूर्वानुभूतं स्मरता च [१]रात्रौ कम्पोत्तरं भीरु [२]तवोपगूढम् ।
[३]गुहाविसारिण्यतिवाहितानि मया कथंचिद् घनगर्जितानि ॥२४॥

[Raghu. 13. 28]

[इति मेघध्वनिः]

**विद्युद्यथा—**

गर्जति यदि वारिधरो गर्जतु [४]तन्नाम निष्ठुरः पुरुषः ।
अपि विद्युत् प्रमदानां त्वमपि च दुःखं न जानासि ॥२५॥

[इति विद्युत्]

**[५]भृङ्गरवो यथा—**

गन्धाढ्यचूत-तरुमञ्जरिमञ्जुगुम्फा-
[६]लीनालि-[७]शौण्डपटली-[८]तरुगीतकानि ।
संमोहना इव मनोभव-सिद्धमन्त्रा-
[९]श्चेतो मुनेरपि चिराय विकारयन्ति ॥२६॥

[इति भृङ्गरवः]

**कोकिलकूजितं यथा—**

त्यजत मानमलं [१०]बत विग्रहैर्न पुनरेति गतं[११] चतुरं वयः ।
परभृताभिरितीव निवेदिते स्मरमते[१२] रमते स्म वधूजनः ॥२७॥

[Raghu. 9. 47]

[॥इति कोकिलकूजितम्॥]

**नेपथ्यं यथा—**

अधरेष्वलक्तकरजः(सः) सुदृशां विशदं कपोलभुवि रोध्ररजः ॥
नवमञ्जनं नयनपङ्कजयो-[१३]र्विभिदे न शङ्खनिहितात् पयसः ॥२८॥

[Śiśupāla. 9. 46]

[॥इति नेपथ्यम्॥]

---

[१] Original यत्र
[२] A. रवो०
[३] A. गुणाविसारिव्यति लोहितानि, K. L. गुहाविसारीन्यभिवाहनानि
[४] K. L. तन्नमे
[५] K. L. भृंगा०
[६] K. L. ०लीनाभि०
[७] L. शौड
[८] L. ०प्तरु०
[९] L. ०श्चतो
[१०] K. L. ०बित
[११] L. गंति
[१२] L. ०मात
[१३] A. ०विभेदे, K. L. ०विभिदेन

सीधुपानं यथा—

सीधुपानविधुरेषु वधूनां निघ्नतामुपगतेषु वपुःषु ।
ईहितं रतिरसा-[१]हितभावं वीत-[२]लक्ष्यमपि कामिषु रेजे ॥२९॥

[Kirāta. 9. 73]

[॥इति सीधुपानम्॥]

दीपो यथा —

नीवीबन्धोच्छ्वसितशिथिलं यत्र [३]यक्षाङ्गनानां
क्षौमं रागादनिभृतकरेष्वाक्षिपत्सु प्रियेषु ।
अर्चिस्तुङ्गानभिमुखगतान् [४]प्रेक्ष्य रत्नप्रदीपान्
ह्रीमूढानां भवति विफलप्रेरणा [५]चूर्णमुष्टिः ॥३०॥

[Megha. Uttara. 7]

[॥इति दीपः॥]

कोपो यथा —

क्षीबतामुपगतास्वनुवेलं[६] तासु रोषपरि-[७]तोषवतीषु ।
अग्रहीन्नु सशरं धनुरुज्झामास [८]नूज्झितनिषङ्गमनङ्गः ॥३१॥

[Śiśupāla. 10. 34]

[ इति कोपः ]

मारुतो यथा—

चुम्बन्नाननमालुठंस्तनतटीमान्दोलयन् कुण्डलं
व्यस्यन्नं शुकपल्लवं मनसिजक्रीडां समुल्लासयन् ।
अङ्गं विह्वलयन् मनो [९]विकलयन्मानं समुन्मीलयन्
नारीणां मलयानिलः प्रिय इव प्रत्यक्षमालिङ्गति ॥३२॥

[ ॥इति मारुतः॥ ]

उपकारो यथा—

तन्मे मनः क्षिपति यत्सरसप्रहार[१०]-
मालोक्य [११]मामगणितस्खलदुत्तरीया[१२] ।
[१३]त्रस्तैकहायन-कुरङ्गविलोलदृष्टि-
राश्लिष्टवत्यमृत[१४]-संवलितैरिवाङ्गैः ॥३३॥

[ ॥इत्युपकारः॥ ]

[१] K. L. ०यत०  [२] A. ०लज्जमपि, K. L. ०लक्षणमपि
[३] Original बिम्बाधराणां  [४] Ibid. प्राप्य  [५] A. तूर्ण०
[६] In L. there is a change in handwriting on folio. 36 (615) beginning with ०तास्वनुवेलं and ending with the colophon to this परीक्षण.
[७] A. ०वेष०  [८] A. ०तूर्जित०, K. तूयित०, L. तूर्येत०
[९] L. विकल्पय  [१०] L. ०प्रद्धान्०  [११] L. मर्म०
[१२] A. ०याः, K. L. ०यः  [13] A. तस्त्रैक  [१४] L. वत्यपिमृत०



रहःस्थानं यथा—

चित्तनिर्वृतिविधायि विविक्तं मन्मथो मधुमदः[१] [२]शशिभासः ।
संगमश्च दयितैः स्म नयन्ति प्रेम कामपि भुवं प्रमदानाम् ॥३४॥

[ Kirāta. 9. 71 ]

[ ॥इति रहःस्थानम्॥ ]

पुष्पमाला यथा—

मन्ये प्रमत्तसुहृदो [३]मूर्छितमदनस्य वीजनं[४] कुरुते ।
प्रमदाजनधम्मिल्ले सायन्तनमल्लिकाप्रकरः ॥३५॥

[ ॥इति पुष्पमाला॥ ]

[५]अनयैव दिशाऽप्यन्यन्मेघसंदर्शनादिकम् ।
ऊह्यं विभावजातं हि रतेरुद्दीपनं बुधैः ॥३६॥

यथा—

गजकदम्बकमेचकमुच्चकैर्नभसि वीक्ष्य नवाम्बुदमम्बरे ।
अभिससार न [६]वल्लभमङ्गना न[७] [८]चकमे च कमेकरसं रहः ॥३७॥

[ Śiśupāla. 6. 26 ]

[ ॥इति मेघदर्शनम्॥ ]

यतोऽमी भावयन्त्येते विशिष्टां रतिमित्यतः[९] ।
विभावा[१०] इति कीर्त्यन्ते रतेर्दार्ढ्यविधायकाः ॥३८॥

इति । यथा मुनिराह—

सुखप्राप्ते(ये)ष्टसंपन्न ऋतुमाल्यादिसेवकः[११] ।
पुरुषः[१२] प्रमदायुक्तः शृङ्गारीति [१३]प्रकीर्तितः[१४] ॥३९॥

उद्दीप्यतेऽरिनारीणां येन वैधव्यदानतः ।
विरहज्वलनश्चित्ते विभावास्तेन कीर्तिताः ॥४०॥

[१] L. omits विसर्ग
[२] K. शिशि०, L. शिशशि०
[३] K. L. repeat मूर्छि०  [४] L. adds तु
[५] L. अनायेव
[६] K. L. वयंभयमंगमंगना (?)
[७] L. omits न  [८] K. L. omit चकमे
[९] A. ०मित्युतः, K. L. ०मित्यदः  [१०] L. ०ता
[११] [१२] A. omits विसर्ग
[१३] A. omits प्रकीर्तितः, L. प्रकीर्तित
[१४] cf. N. S. (B). VI 47.

*इति श्रीजगदीशवनदेवनिजगणेन श्रीजगदीश्वरीकामेश्वरीचरणकिङ्करेण श्रीब्रह्माद्रि-विभुना अध्युष्टतमनरेश्वरेण भीष्मपुरजयानीतानेकराजकन्यारत्नेन श्रीपुरग्रहणसंवर्धितयशोभरेण वाटिकाचलग्रहणजनितकीर्तिपूर(A. ०पुर)-पराजिताचलनायकेन संगमनीरदुर्गोद्धरणोद्धृत-सकलमण्डलाधीश्वरेण दमनपुरविध्वंसनबन्दीकृतयवनीनिचयेन महिषमेरुजयाजेयविभवेन शाकम्भरीरमणपरिशीलनपरिप्राप्त-शाकम्भरीपरितोषित-शाकम्भरीप्रमुखशक्तित्रयेण अष्टादशगिरिविजयविख्यातवीर्यगर्वेण महदम्बमातृकापुरोद्धूलनर्धावित(A. ०ता०)महोरगपुरेण श्रीवनदेवस्वामिप्रा(L. ०प्र०)साद-रचनापरपरमेश्वरेण श्रीत्र्यम्बकेश्वरसन्निधिकीर्तिस्तम्भोन्नतजयस्तम्भेन श्रीब्रह्मगिरिभौमस्वर्गतायथार्थीकरणरचितचारुपथेन श्रीकामाक्षागिरिनवीन-निर्मितपराजितसुमेरुणा श्रीमहिषाचलोपरिश्रीहरिशरणरचिताचलदुर्गेण अभिनवभराताचार्येण वीणावादनप्रवीणेन यवनकुलाकालकालरात्रिरूपेण त्रिसन्ध्यक्षेत्रसमुद्रसंभवरोहिणीरमणेन परमभागवतेन महाराजाधिराजमहाराणा-श्रीमृगाङ्कक-तामराजेन्द्रनन्दनेन महाराज्ञीसौभाग्यवती-जसमाम्बिकाहृदयनन्दनेन सकलसीमन्तिनीशिरोमणि-निकुम्भराजन्यवंशावतंस-महाराज्ञीश्रीकर्मवतीलखुमादेवीहृदयाधिनाथेन महाराजधिराजकालसेनमहीमहेन्द्रेण (L. omits महीमहेन्द्रेण) विरचिते संगीतराजे षोडशसाहस्रयां संगीतमीमांसायां रसरत्नकोशे विभावोल्लासे उद्दीपन-विभावपरीक्षणं चतुर्थं समाप्तम् (L. omits समाप्तम्) । उल्लासश्च द्वितीयः समाप्तः । (L. omits समाप्तः in the changed handwriting which ends with उल्लासश्च द्वितीयः at the end of the folio. The normal handwriting reappears on the next folio beginning with चतुर्थं समाप्तं, उल्लासश्च समाप्तः ।)

———

* L. agrees with A.; K. reads the colophon as follows:—

इति श्रीसरस्वतीरससमुद्भूतकैरवोद्याननायकेन अभिनवभरताचार्येण मालवाम्भोधि-माथमन्थमहीधरेण मण्डलदुर्गोद्धरणोद्धृतसकलमण्डलाधीश्वरेण अजय[मेरु]जयाजेयविभवेन यवन-कुलाकालकालरात्रिरूपेण शाकम्भरीरमणपरिशीलनपरिप्राप्तशाकम्भरीतोषित-शाकम्भरीप्रमुख-शक्तित्रयेण नागपुरोद्धूलनर्धषितनागपुरेण..............................................
इत्यादि बिरुदावली-विराजमानेन श्रीमहाराजाधिराज-महाराणा-श्रीकुम्भकर्ण-महीमहेन्द्र-विरचिते संगीतराजे षोडशसाहस्रयां संगीतमीमांसायां रसरत्नकोशे उद्दीपनविभावपरीक्षणं नाम चतुर्थं समाप्तम् । उल्लासश्च समाप्तः ॥

# तृतीयोऽनुभावोल्लासः

## अनुभावा नाम प्रथमं परीक्षणम्

यच्चिन्तितमनुभावा भवन्ति ते ते विकारसद्भावाः[१] ।
तं भावाधिपमीशं परिणतमनसाऽनुभावये सततम् ॥१॥

अथानुभावा वर्ण्यन्ते भरताचार्यसम्मताः[२] ।
यच्चाह भगवानत्रानुभावो भावबोधकः ॥२॥

यतोऽनुभावयन्त्येते विभाव[३]-जनितां रतिम् ।
विस्मृतां बोधयन्त्येवमनुभावाः प्रकीर्तिताः ॥३॥

[४]रसतां गच्छति स्थाष्णौ कार्यं यदुपलभ्यते ।
अनुभावः स विज्ञेयो भावसंस्थान-सूचकः ॥४॥

तत्र नाट्यविदां तावद् रीतिरेषा[५] प्रवर्तते ।
विभावपरिपुष्टे तु रत्यादौ स्थायिनि स्थिते ॥५॥

समुद्रकल्पे[६], कल्लोल-[७]स्थानीया व्यभिचारिणः ।
चेतोविकारा निर्वेदप्रमुखास्ते-[८]ऽपि कीर्तिताः ॥६॥

साक्षाद्दुरधिगमत्वाद् विकारत्वेन चेतसः ।
तत्सूचकास्तु ये वागारम्भविक्षेपकादयः ॥७॥

कटाक्षप्रमुखास्ते [९]स्युर्निर्वेदादेरनुस्फुटम् ।
[१०]तथाऽनुभावयन्त्येते निर्वेदाद्यमतो मताः ॥
अनुभावा, इदं चाभिधानमेषां प्रगल्भते ॥८॥

अमुष्यत्वादपि[११] प्रायो युक्तं [१२]भवितुमत्र तु ।
निरूपका रसस्यैकेऽन्यथा[१३] प्राहुस्तदुच्यते ॥९॥

———

[१] K. L. omit विसर्ग [२] K. L. ०ते: [३] A. ०वा
[४] L. omits ०र० [५] K. L. ०रोषा [६] L. ०काल्प
[७] A. L. स्थायिनीया
[८] L. links up here ०स्युर्निर्वेदादे० etc. of verse 8, line 1, and omits the portion beginning with ०ऽपि and ending with कटाक्षप्रमुखा०
[९] A. omits स्युर्निर्वेदादेरनु० [१०] K. L. तवा०
[११] A. ०दिभिप्रायो [१२] A. भवतु, omits ०मत्र तु
[१३] K. L. ०या

*इति श्रीजगदीशवनदेवनिजगणेन श्रीजगदीश्वरीकामेश्वरीचरणकिङ्करेण श्रीब्रह्माद्रिविभुना अध्युष्टतमनरेश्वरेण भीष्मपुरजयानीतानेकराजकन्यारत्नेन श्रीपुरग्रहणसंवर्धितयशोभरेण वाटिकाचलग्रहणजनितकीर्तिपूर(A. ०पुर)-पराजिताचलनायकेन संगमनीरदुर्गोद्धरणोद्धृत-सकलमण्डलाधीश्वरेण दमनपुरविध्वंसनबन्दीकृतयवनीनिचयेन महिषमेरुजयाजेयविभवेन शाकम्भरीरमणपरिशीलनपरिप्राप्त-शाकम्भरीपरितोषित-शाकम्भरीप्रमुखशक्तित्रयेण अष्टादशगिरिविजयविख्यातवीर्यगर्वेण महदम्बमातृकापुरोद्धूलनर्धावित(A. ०ता०)महोरगपुरेण श्रीवनदेवस्वामिप्रा(L. ०प्र०)साद-रचनापरपरमेश्वरेण श्रीत्र्यम्बकेश्वरसन्निधिकीर्तिस्तम्भोन्नतजयस्तम्भेन श्रीब्रह्मगिरिभौमस्वर्गतायथार्थीकरणरचितचारुपथेन श्रीकामाक्षागिरिनवीननिर्मितपराजितसुमेरुणा श्रीमहिषाचलोपरिश्रीहरिशरणरचिताचलदुर्गेण अभिनवभरताचार्येण वीणावादनप्रवीणेन यवनकुलाकालकालरात्रिरूपेण त्रिसन्ध्यक्षेत्रसमुद्रसंभवरोहिणीरमणेन परमभागवतेन महाराजाधिराजमहाराणा-श्रीमृगाङ्क-तामराजेन्द्रनन्दनेन महाराज्ञीसौभाग्यवतीजसमाम्बिकाहृदयनन्दनेन सकलसीमन्तिनीशिरोमणि-निकुम्भराजन्यवंशावतंस-महाराज्ञीश्रीकर्मवतीलखुमादेवीहृदयाधिनाथेन महाराजधिराजकालसेनमहीमहेन्द्रेण (L. omits महीमहेन्द्रेण) विरचिते संगीतराजे षोडशसाहस्र्यां संगीतमीमांसायां रसरत्नकोशे विभावोल्लासे उद्दीपनविभावपरीक्षणं चतुर्थं समाप्तम् (L. omits समाप्तम्) । उल्लासश्च द्वितीयः समाप्तः । (L. omits समाप्तः in the changed handwriting which ends with उल्लासश्च द्वितीयः at the end of the folio. The normal handwriting reappears on the next folio beginning with चतुर्थं समाप्तं, उल्लासश्च समाप्तः ।)

---

* L. agrees with A.; K. reads the colophon as follows:—

इति श्रीसरस्वतीरससमुद्भूतकैरवोद्याननायकेन अभिनवभरताचार्येण मालवाम्भोधिमाथमन्थमहीधरेण मण्डलदुर्गोद्धरणोद्धृतसकलमण्डलाधीश्वरेण अजय[मेरु]जयाजेयविभवेन यवनकुलाकालकालरात्रिरूपेण शाकम्भरीरमणपरिशीलनपरिप्राप्तशाकम्भरीतोषित-शाकम्भरीप्रमुखशक्तित्रयेण नागपुरोद्धूलनर्धषितनागपुरेण..............................................
इत्यादि बिरुदावली-विराजमानेन श्रीमहाराजाधिराज-महाराणा-श्रीकुम्भकर्ण-महीमहेन्द्र-विरचिते संगीतराजे षोडशसाहस्र्यां संगीतमीमांसायां रसरत्नकोशे उद्दीपनविभावपरीक्षणं नाम चतुर्थं समाप्तम् । उल्लासश्च समाप्तः ॥

# तृतीयोऽनुभावोल्लासः

## अनुभावा नाम प्रथमं परीक्षणम्

यच्चिन्तितमनुभावा भवन्ति ते ते विकारसद्भावाः[१] ।
तं भावाधिपमीशं परिणतमनसाऽनुभावये सततम् ॥१॥

अथानुभावा वर्ण्यन्ते भरताचार्यसम्मताः[२] ।
यच्चाह भगवानत्रानुभावो भावबोधकः ॥२॥

यतोऽनुभावयन्त्येते विभाव[३]-जनितां रतिम् ।
विस्मृतां बोधयन्त्येवमनुभावाः प्रकीर्तिताः ॥३॥

[४]रसतां गच्छति स्थाष्णौ कार्यं यदुपलभ्यते ।
अनुभावः स विज्ञेयो भावसंस्थान-सूचकः ॥४॥

तत्र नाट्यविदां तावद् रीतिरेषा[५] प्रवर्तते ।
विभावपरिपुष्टे तु रत्यादौ स्थायिनि स्थिते ॥५॥

समुद्रकल्पे[६], कल्लोल-[७]स्थानीया व्यभिचारिणः ।
चेतोविकारा निर्वेदप्रमुखास्ते-[८]ऽपि कीर्तिताः ॥६॥

साक्षाद्दुरधिगमत्वाद् विकारत्वेन चेतसः ।
तत्सूचकास्तु ये वागारम्भविक्षेपकादयः ॥७॥

कटाक्षप्रमुखास्ते [९]स्युर्निर्वेदादेरनुस्फुटम् ।
[१०]तथाऽनुभावयन्त्येते निर्वेदाद्यमतो मताः ॥
अनुभावा, इदं चाभिधानमेषां प्रगल्भते ॥८॥

अमुष्यत्वादपि[११] प्रायो युक्तं [१२]भवितुमत्र तु ।
निरूपका रसस्यैकेऽन्यथा[१३] प्राहुस्तदुच्यते ॥९॥

---

[१] K. L. omit विसर्ग [२] K. L. ०ते: [३] A. ०वा
[४] L. omits ०र० [५] K. L. ०रोषा [६] L. ०काल्प
[७] A. L. स्थायिनीया
[८] L. links up here ०स्युर्निर्वेदादे० etc. of verse 8, line 1, and omits the portion beginning with ०ऽपि and ending with कटाक्षप्रमुखा०
[९] A. omits स्युर्निर्वेदादेरनु० [१०] K. L. तवा०
[११] A. ०दिभिप्रायो [१२] A. भवतु, omits ०मत्र तु
[१३] K. L. ०या

[१]कैशिकीप्रमुखा रत्यादिकं स्थायिनमञ्जसा ।
[२]विकाराद्यैरनुमिता दृष्टेः[३] स्वानुभवास्पदम्[४] ॥१०॥

निर्वेदाद्याः[५] समानीता [६]गमयन्त्यनुभावताम् ।
रसं,[७] ततस्तु [८]तानेवानु[९]-भावानाहुरेकके[१०] ॥११॥ +

नातीव क्रियतेऽत्रापि [११]निर्बन्धो नाममात्रके ।
यतो विप्रतिपत्तिस्तु[१२] स्थीयता-[१३]मियमेव हि ॥१२॥

अथानुभावाः—
भ्रूलीलादृग्विकाराश्च मुखरागोऽथ[१४] कम्पने(नम्) ।
हस्तपादविकाराश्च कराद्यभिनय[:] स्मितम् ॥
लीला[१५]-दिहाववर्गा[१६]-श्चानुभावा मुनिसम्मताः ॥१३॥

यथा—
अपाङ्गपथिकं चक्षुः[१७] स्मित[१८]-ज्योत्स्नार्द्रमाननम् ।
[१९]मृगीदृशां वचोभङ्गैरनुभावा हरन्ति ये ॥१४॥

भ्रूलीला यथा—
रामामये [२०]विपतरो नववल्लरीव
संमोहिनी जयति कापि तरङ्गिता[२१] भ्रूः ।
कौटिल्यभङ्गिमभवालसकोमलश्री-
र्यंत्स्वीकृतं नयनकुड्मलमुज्जिहीते ॥१५॥

॥ इति भ्रूलीला ॥

[१] L. कैं०
[२] K. L. विकराद्यैं०
[३] K. L. दृष्टेरनु०
[४] K. L. ०देम्
[५] K. ०द्या, L. ०द्य
[६] K. L. भावयंत्यनु०
[७] L. रसनं तस्तु (the अनुस्वार of रसं is misplaced and ०त० is replaced by ०न०)
[८] K. L. तान्ये०
[९] A. ०नुभावाहु०, L. ०नुभावोनाहुरेकै
[१०] K. ०रेके
[११] K. निर्बंधा, L. निबंघा
[१२] K. L. ०स्थ
[१३] A. ०मिदमेव, K. L. ०मिवमेव
[१४] K. L. रागोष्ठ० (L. ०ष्ठं)
[१५] K. L. ०लीलां
[१६] K. वर्गं०
[१७] K. L. omit विसर्ग
[१८] K. L. स्मितं
[१९] There seems to be no grammatical connection between the first and second lines of this verse.
[२०] L. विषय०
[२१] K. L. ०त



अपाङ्गदृग्विलासः[१] कटाक्षो यथा—
विपुलेन[२] सागरशयस्य कुक्षिणा
भुवनानि यस्य पपिरे युगक्षये ।
[३]मदविभ्रमासकलया पपे पुनः
[४]स पुरस्त्रियैकतमयैकया दृशा ॥१६॥

[ Śiśupāla. 13. 40 ]
[ इति दृग्विलासः ]

कराभिनयो यथा—
परिपाटलाब्ज-[५]तलचारुणाऽसकृ-
च्चलिताङ्गुली-किसलयेन पाणिना ।
सशिरःप्रकम्पमपरा रिपुं मघो-
रनुदीर्णवर्णनिभृतार्थमाह्वयत् ॥१७॥

[ Śiśupāla. 13. 42 ]
[ इति कराभिनयः ]

चारुहसितं यथा—
पुष्पं प्रवालोपहितं यदि स्यान्मुक्ताफलं वा स्फुटविद्रुमस्थम् ।
ततोऽनुकुर्याद् विशदस्य तस्या-स्ताम्रौष्ठपर्यस्तरुचः[६] स्मितस्य ॥१८॥

[ Kumāra. 1. 44 ]
[ इति चारुहसितम् ]

लीलादि-[७]हाववर्गस्य विभावत्वे विकल्पतः ।
[८]मुनेरत्रानुभावत्वं सम्मतं तद्यथोच्यते ॥१९॥

लक्षणोदाहृतीनां [९]च वैचित्र्यादुभयाङ्गता ।
भङ्गिनोऽत्रानुभावत्वं[१०] विभावत्वं च दृश्यते ॥२०॥

लीलाविलासविच्छित्तिः[११]—[१२]किलकिञ्चितविभ्रमाः ।
मोट्टायितं च विब्बोक-[१३]स्तथा कुट्टमितं [१४]भवेत् ॥२१॥

[१] A. omits विसर्ग
[२] L. ०लैन (in K. the हलन्त mark below the ०त० of ०यंत्० in the fourth foot of verse 15 falls on the top of ०ले० of विपुले० and has been deciphered as ै मात्रा in L.)
[३] L. मक्ष०
[४] A. सुसपुर०
[५] L. त । लचारुणसकृ०
[६] K. रुच (omits विसर्ग), L. रुचि०
[७] A. ०हादि०
[८] A. मुनेरनुभवत्वं यत्संमतं
[९] L. चे
[१०] K. L. ०नुभावित्वं विभावित्वं
[११] K. L. omit विसर्ग
[१२] K. L. कलि०
[१३] A. ०कं तथा
[१४] L. भेवेत्

विकारो ललितं स्त्रीणां, स्वभावप्रभवा दश ।
हावास्तथा नृणामेते विकारा[:] संभवन्ति च ॥२२॥

[१]केलिर्हेला मदो[२] मौग्ध्यं चाटुहावाल्पतास्तथा ।
विक्षेपपरिहासौ च भावो व्याजेङ्गितेऽपि च ॥२३॥

प्रतिभेदनमाकारश्चित्तस्खलितमित्यपि ।
कुतूहलं क्रीडनकं प्रेमाभि[३]-सन्धिसंवृती ॥२४॥

[४]चकितं च सखीष्वत्र[५] विश्रम्भस्य निवेदनम् ।
अनुतापः[६] क्रमादेषामुदाहरणमुच्यते ॥२५॥

[ अथ लीला ]—
तत्र वात्स्यायनः—

[७]प्रेमजननचेष्टाया[८] अनुरागाधिकेन या ।
क्रियतेऽनुकृतिः सेह लीलोक्ता मुनिसत्तमैः ॥२६॥

तत्र [९]रत्नकोशादुदाहरणावली विलिख्यते यथा—

वेणीबन्धकपर्दिनी[१०] सिततनुः [११]श्रीखण्डपांसूत्करैः
[१२]केतक्येकदलेन्दुभृद्बिसलताव्यालोपवीतिन्यपि ।
प्राक्पाणिग्रहणाद्[१३]-विनोदविधये सख्याः पुरो लीलया
[१४]कुर्वाणाऽनुकृतिं हरस्य दिशतु श्रेयांसि वः पार्वती ॥२७॥

[ Nāgara. 13. 16; quoted in Nāṭaka. p. 108 ]

[ इति लीला ]

[अथ विलासः—]

[१५]नेत्रभ्रूवक्त्रपाणीनां पादयोश्च विशेषतः ।
यत्संविलसनं[१६] सद्भिर्विलासः स उदीरितः ॥२८॥

यथा--

स्खलितपादयुगं तरले दृशौ मुखमकारणसाचिकृतं मुहुः ।
[१७]लुठितपाणितलं [१८]वसनाञ्चले विलसितं स्फुटमेव न तद्भ्रुवः ॥२९॥

---

[१] L. कभि०  [२] A. मदौ, K. repeats मदो  [3] L. ०धि०
[४] K. L. transpose the two lines of this verse.
[५] A. सखीष्टत्वं, L. सखीष्टत्र  [६] K. L. omit विसर्गं
[७] K. L. प्रेमजनस्य  [८] A. ०वा
[९] The author refers to the नाटकलक्षणरत्नकोशः of सागरनन्दिन्.
[१०] A. ०नः  [११] K. L. श्रीकंठपांशू०
[१२] A. केतक्येक०  [१३] K. L. गहद्विमेद०
[१४] A. कुर्वाणानुकृतिर्हरस्य, K. L. कुर्वानुकृतिं (L. ०नृकृतिं)
[१५] K. L. नेत्रभ्रु०  [१६] A. ०विलसितं  [१७] A. लुठति
[१८] K. L. वसनांतचले



तथा च भरताचार्यः—

यो वल्लभासन्नगतो विकारो गत्यासनस्थानविलोभनेषु ।
तथा स्मितक्रोधचमत्कृतं[१] च [२]विधूननं चक्रकृतं विलासः[3] ॥३०॥

यथा —

[४]स्खलितबहुलः पादन्यासो विलोकितमन्यतः[५]
स्थितिरविषये वक्त्राम्भोजं प्रयाति [६]विहूणनम् ।
स्मितमपि मुहुर्व्यर्थं[७] क्रोधो[८]वृथैव चमत्कृति-
[९]र्दयितमभिगच्छन्त्यास्तन्व्या विलास उदेत्ययम् ॥३१॥

[Nāgara. 13. 18; quoted in Nāṭaka. p. 109]

शाक्यभिक्षुरपि—

स्थानासनगमनानां[१०] [११]नेत्रभ्रूहस्तकर्मणां चैव[१२] ।
उत्पद्यते विशेषो यः श्लिष्टः स भवति विलासः ॥३२॥

स्थाने श्लिष्टविलासो यथा —

द्वारि चक्षुरधिपाणि कपोलौ जीवितं त्वयि कुतः कलहोऽस्याः ।
कामिनामिति वचः पुनरुक्तं प्रीतये [१३]नव-नवत्वमियाय ॥३३॥

[Kirāta. 9. 43]

[इति विलासः]

विच्छित्तिर्यथा--

प्रसाधनानां दयितापराधे यदीर्ष्ययाऽनादरतः सखीनाम् ।
प्रयत्नतो धारणमङ्गनाभि-र्विच्छित्तिरेषा कथिता मुनीन्द्रैः ॥३४॥

यथा—

प्रियेण [१४]संग्रथ्य विपक्षसन्निधा-वुपाहितां वक्षसि [१५]पीवरस्तने ।
स्रजं न काचिद् विजहौ[१६] जलाविलां [१७]वसन्ति हि [१८]प्रेम्णि गुणा न वस्तुनि[१९] ॥३५॥

[Kirāta. 8. 37]

[इति विच्छित्तिः]

---

[१] L. चमकृतं  [२] A. विहूणनं  [३] L. omits विसर्गं
[४] K. L. स्खलति बहलः, original स्वलितबहुलं पादन्यासे
[५] A. ०मित्युक्तः  [६] A. omits विहूणनं, original विकूणनं
[७] K. L. ०र्व्यक्तः, original मुधा व्यर्थः  [८] A. क्रोधावृत्त्यैव
[९] Original ०र्दयितसविधं यान्त्यास्तन्व्या विलासरसो ह्ययम्
[१०] A. omits ०न गमनानां ने०, L. स्थानासनमंगमनानां
[११] K. L. नेत्रभ्रु०  [१२] L. चैवं
[१३] A. न नववत्वमियया, L. नवनप्रन्वयियाय (?)  [१४] L. संपथ्य
[१५] L. पीवस्तने  [१६] L. ०जहो  [१७] A. विशंति
[१८] K. L. प्रेम०  [१९] A. K. L. वस्तुषु

किलकिञ्चितं यथा—

शुष्कं क्षणं परुषितं क्षणमश्रुपातः
क्रोधे[१] मुहुर्विहसितं[२] बहुधा प्रगीतम् ।
व्यामिश्ररूपमिति हर्षवशात् प्रयुक्त-
मुक्तं बुधैः [३]श्रुतधनैः किलकिञ्चिताख्यम्[४] ॥३६॥

यथा—

क्रन्दत्यवाष्पमभये भयमादधाति[५]
क्रोधं च नाटयति तत्क्षणमेव [६]हर्षम् ।
[७]आलम्ब्य [८]भावमबला किलकिञ्चिताख्यं[९]
[१०]हावं विभावयति पुण्यकृतोऽन्तिकस्था[११] ॥३७॥

[Nāgara. 13. 12; quoted in Nāṭaka. p. 110]

[इति किलकिञ्चितम्]

[१२]विभ्रमो यथा—

तत्र शाक्यभिक्षुर्यथा—

क्रोधस्मितं च कुसुमाभरणादियाच्ञा[१३]
तत्तर्जनं च सहसैव विडम्बनं च ।
आक्षिप्य कान्तवचनं लपनं सखीनां
[१४]निष्कारणोत्थितगतं खलु विभ्रमः स्यात् ॥३८॥

तथा च शणिः (?)—

साङ्गभङ्गविकारेण सकटाक्षविलोकनैः ।
केश-[१५]संबन्धनव्याजाद् बाहुमूलप्रदर्शनैः ॥३९॥

मेखलोरु-[१६]प्रकटनैः स्तननाभिप्रदर्शनैः ।
अभिलाषप्रकटनैर्विभ्रमः परिकीर्तितः ॥४०॥

यथा—

केनोक्ता तव नाथ [१७]रम्यरचना [१८]मुक्तोऽस्तु मे कुन्तलः
किं साम्मुख्यमतो मुखं नयसि मे तिर्यक् स्थितं शोभने ।
मालेयं त्रुटिता भवेत् सुमहता[१९] वातेन किं वेपथुः
पुण्यात्मेति स यौवनं[२०] प्रियतमा-सृष्टं भवेद् विभ्रमः ॥४१॥

[१] K. L. क्रोधो  [२] A. ०लसितं  [३] K. L. श्रत०
[४] L. ख्य  [५] Original ०मातनोति  [६] Ibid. हासम्
[७] K. L. आलिब्य  [८] Original हर्ष०  [९] L. omits अनुस्वार
[१०] Original भावान्  [११] K. L. add विसर्ग  [१२] L. विभ्रामा
[१३] A. K. L. यांचा  [१४] K. L. निःकारणो०  [१५] K. L. ०संयमन०
[१६] L. ०प्रका०  [१७] K. L. केश०  [१८] A. युक्तोऽस्तु
[१९] A. ०ती  [२०] A. omits अनुस्वार



आस्तां नाथ[१] कथा कथं सखि लता सिक्ता त्वया [२]माधवी
कान्ते[3] तन्मम संप्रयच्छ कुसुमं किं चामुना मे फलम् ।
माल्यं[४] निर्मलयामि मौक्तिकमिदं न्यस्तं त्वया दह्यता-
मित्थं विभ्रमसंभ्रमो[५] मदयति प्रेयांसमेणीदृशः[६] ॥४२॥

तथा च बाहुलकः—

यच्चित्तवृत्तेरवनिस्थितत्वं शृङ्गारजं तत्खलु विभ्रमः स्यात् ।
भेदास्त्रयस्तस्य मदानुबन्धकार्कश्यसंज्ञाः[७] कथिता विदग्धैः ॥४३॥

[अथ मदविभ्रमः—]

रागे प्रवृद्धे दयितेऽनुकूले याते प्रवृद्धिं परमां प्रमोदे ।
उन्मार्गगाया मनसः प्रवृत्तिः स[८] स्यान्मदो मन्दवशेन कार्यः ॥४४॥

[अथानुबन्धविभ्रमः—]

अचिराय गते कुमारभावे हृदि याते मदने च मुग्धभावम् ।
कुरुते रतिचेष्टितानुबन्धे हृदये सोऽत्र मनो-[९]भवानुबन्धः ॥४५॥

[अथ कार्कश्यविभ्रमः—]

मनसोऽयमिहोदितो [१०]विकार[ः]प्रौढत्वेन स कर्कशः स्मृतोऽत्र ।
रतिसंगरकर्कशत्वयोगात्तदयं स्मेरमनोभवप्रभावात् ॥४६॥

तथा च भरताचार्यः—

कथां प्रवृत्तामुत्सृज्य स्वालापान्तरयोजनाम् (नम्) ।
माल्याभरणकेशानां स्रस्तानामथ नास्थिता ॥४७॥

प्रमदस्यानुबन्धस्तु मन्मथस्यानुबन्धनम् ।
कर्कशत्वं प्रगल्भत्वं रतिश्रमसहिष्णुता ॥४८॥

[१] K. L. नायकता (L. ०काता)  [२] A. मागधी  [3] K. L. कान्तै
[४] L. omits अनुस्वार  [५] A. ०संभ्रमैरुदयति
[६] L. ०दृशाः  [७] A. omits विसर्ग
[८] K. सख्यान्मदो, L. संख्यान्मदो  [९] L. omits ०भवा०
[१०] K. L. omit the portion beginning with विकारप्रौढत्वे in this verse and ending with देहि ममावकाशम् in the second line of verse 62. The above verse is numbered as 44 in K. L. at the end of इत्यादिकुट्टमितमाकुलमाचरन्ती भूयो नवानि कुरुते रमणी रतानि ॥ (third and fourth lines of verse 62 according to our numbers, which are linked up here as a part of this verse). The next verse beginning with केशस्तनाधरादीनां etc. is numbered as 61 in K. L. Apparently, one folio of the original copy of K. has been omitted by the scribe of K. and this omission has found a place in L. in the natural course.

तथा चोक्तम् —

आकस्मिकं विहसितं क्रोधश्चानपराधजः ।
नखदन्तप्रहाराणां विना-हेतु-निपातनम् ।।४९।।

मञ्जीरस्तबकादीनां याचित्वा धारणक्षणम् ।
निर्निमित्तं परित्यागः क्रीडारामेषु संततम् ।।५०।।

वस्त्राभरणमाल्यादेर्वृत्तस्योच्चारणं विना ।
खण्डनं ग्लायनं वापि विभ्रमस्यैव चेष्टितम् ।।५१।।

[ इति विभ्रमः ]

[अथ मोट्टायितम् - ]

श्रुत्वा कथां प्रियजनस्य च सन्निधौ वा
कर्णोदरस्थिति-चलत्तनुतर्जनीकम् ।
यद्यङ्गभङ्गमपि जृम्भितमङ्गनानां
मोट्टायितं तदुदितं स्मरशास्त्रविद्भिः ।।५२।।

यथा —

तस्याङ्घ्रिद्वितयं नमन्ति विबुधाः सैवैककः[1] सर्ववित्
तं मृत्युञ्जयमामनन्ति [मुनयः सोऽद्याप्य]-पाणिग्रहः ।
इत्याकर्ण्य कथां हरस्य विजयाऽभ्यर्णे[2] विवाहात् पुरा
भङ्क्त्वाङ्गानि विजृम्भिते[3] गिरिभुवो मोट्टायितं पातु वः ।।५३।।

[ Nāgara. 13. 28, quoted in Nāṭaka p. 110 ]

कथायां सन्निधौ वापि कर्णकण्डूविजृम्भितम् ।
कान्तस्य क्रियते वध्वा तद्धि मोट्टायितं मतम् ।।५४।।

।। इति मोट्टायितम् ।।

विब्बोको यथा—

तत्र वात्स्यायनः—

सौभाग्यस्यातिगर्वेण यत् प्रियस्यावधारणम् ।
ताडनं चावतंसेन स्रजा काञ्च्या च बन्धनम् ।।५५।।

स्वल्पागसि प्रिये सिञ्जन् नूपुरेणाङ्घ्रिणा हतिः ।
दन्तखण्डितपत्रैश्च रोषस्यानेऽपि यत् स्मितम् ।।५६।।

प्रेयस्ताम्बूलरागेण रागश्चोष्ठप्रवालकैः ।
विब्बोकाख्यः स्मृतो हावः कामशास्त्रविचक्षणैः ।।५७।।

शाक्यभिक्षुरपि—

अभिनववस्तूपकृतावपि गूर्वादनादरस्तन्व्याः ।
स्खलनं प्रियस्य संयम-ताडनमत्राभ्यधायि विब्बोकः ।।५८।।

---

[1] A. स त्वेककः
[2] Original विजया पार्श्वे
[3] Ibid. ०तं



अनास्था वस्तूनामभिमत-[1]गुणानामुपकृतौ
म(घ)नो गर्वस्तन्व्या [2]रुषितहसिताडम्बरविधिः ।
प्रहारः पादाभ्यां यमनमथ[3] काञ्च्या चरणयोः
[4]स्त्रिया यद् विब्बोकं तदिदमिति धन्योऽनुभवति ।।५९।।

[Nāgara. 13. 36; quoted in Nāṭaka. p. 111]

अवधीरणे कालिदासो यथा—

निर्विभुज्य दशनच्छदं ततो वाचि भर्तुरवधीरणापरा ।
शैलराजतनया समीपगामाललाप विजयामहेतुकम् ।।६०।।

[Kumāra. 8. 49]

[इति विब्बोकः]

कुट्टमितं यथा—

तत्र भरताचार्याः—

केशस्तनाधरादिग्रहणे रतहर्षसंभ्रमोपेतम् ।
कुट्टमितं विज्ञेयं सुखं च दुःखोपचारेण ।।६१।।

यथा—

दासी भवामि तव निर्दय निःसहाऽस्मि
मुञ्च क्षणं स्वपिमि देहि ममावकाशम् ।
इत्यादिकुट्टमितमाकुलमाचरन्ती
भूयो नवानि कुरुते रमणी रतानि ।।६२।।

भोजराजस्तु सरस्वतीकण्ठाभरणे एतद्विपरीतं कुट्टमितमाह—

यथा —

[5]केशस्तनाधरादीनां ग्रहाद् दुःखेऽपि यत् पुनः ।
सुखाविष्करणं तन्व्या तच्च[6] कुट्टमितं मतम्।।६३।।

---

[1] Original ०तराणामुपहृतौ
[2] Ibid. ०रुषविहसिता०
[3] Ibid. ०मपि
[4] Ibid. कृतागा
[5] cf. the following prose portion in S. K. V, p. 533 :—
केशस्तनाधरादिग्रहणाद् दुःखेऽपि सुखबुद्धिचेष्टा कुट्टमितम् । The subsequent illustrative verse in our text ह्री भरा०. etc. has also been quoted in S. K. in this context; cf. the following verse from Nāgara.
केशस्तनादिग्रहणे हर्षादिप्रतिमे सुखे ।
दुःखाविष्करणं तन्व्या यत्तत् कुट्टमितं मतम् ।। (१३. २९)
[6] K. L. तत्कुट्टमितं

यथा—

ह्रीभराद्वनतं परिरम्भे रागवानवटुजेष्ववकृष्य ।
अर्पितोष्ठदलमाननपद्मं योषितो मुकुलिताक्षमधासीत्[१] ॥६४॥

[Śiśu. 10. 52]

अत्र तु भोजराजस्य अन्यत्राचार्यानुमते स्थितस्य अप्रमाणित्वं[२] कर्तुं न शक्यत इति उभयमपि[३] प्रमाणम् ।

[इति कुट्टमितम्]

विकारो यथा—

तत्र वात्स्यायनः—

वचसा प्राप्तकालेनानभिधाय[४] विधीयते ।
[५]क्रियया यदनुष्ठानं विकृतं[६] तदुदाहृतम् ॥६५॥

यथा—

पत्युः शिरश्चन्द्रकलामनेन स्पृशेति [७]सख्या परिहासपूर्वम् ।
सा रञ्जयित्वा चरणौ कृताशीर्माल्येन तां निर्वचनं जघान ॥६६॥

[Kumāra. 7. 19]

अत्र ज्ञानेऽपि सति लज्जाभरात् अभाषणम् । अथवा अस्यार्थस्य योषिद्भिरकथनमथवा[८] यौवनविकारेण स्वभावात् ॥ अन्यथाकथनं [९]तदिदं वात्स्यायनशणिशाक्यानां मतत्रयेऽपि सर्वं [१०]विकृतमेव ॥

तत्र लज्जया अभाषणं यथा

प्रभाते [११]पृच्छन्तीमनुरहसवृत्तं सहचरीं[१२]
नवोढा न व्रीडामुकुलितमुखीयं सुखयति ।
लिखन्तीनां पत्राङ्कुरमनिशमस्याः[१३] कुचयुगे
चमत्कारो गूढं [१४]करजपदमासां कथयति ॥६७॥

इत्यादित्रिष्वप्युदाहार्यम्[१५] [॥इति विकाराः॥] । इति स्त्रीणां स्वभावजा दश हावाः ॥

अथोभयोः स्वभावजाः कथ्यन्ते ।

अत्र वात्स्यायनः—

वल्लभेन सहैकान्ते कान्तायाः [१६]क्रीडितेषु यः ।
चुम्बनालिङ्गनादीनां विशेषः केलिरुच्यते ॥६८॥

[१] K. L. ०क्षीत्  [२] K. L. ०माणिकत्व
[३] L. ०मिधि  [४] K. L. ०कालेनाभिधा (L. ०धी) याभिधीयते
[५] A. क्रियाया L. क्रियथा  [६] K. L. विस्वनं
[७] K. L. सस्या  [८] A. omits अथवा  [९] A. यदिदं
[१०] K. L. विहृतमेव  [११] K. L. पृच्छती०  [१२] K.L. omit अनुस्वार
[१३] K. L. ०मनसिमस्याः  [१४] L. कंरज०  [१५] A. ०हयंम्
[१६] K. L. क्रीडते तु



मदनशरहते[१]-श्चोपांशु कान्ता समन्ता-
दुपरि निरवलम्बा प्रेयसो निष्पपात ।
[२]सपदि स पतिरेनामालिलिङ्गे चुचुम्ब
स्मर-[३]शरनिकरोऽयं पश्य [४]कङ्केल्लिकल्पः ॥६९॥

[॥इति केलिः॥]

हेला यथा—सूत्रकारः—

प्रवृत्तेनानुरागेण चित्तोल्लासप्रदर्शनम् ।
[५]अन्तःप्रसादहेतुर्यत्[६] सा [७]हेलेति निगद्यते ॥७०॥

[८]प्रौढच्छायाऽभिरूढानां नारीणां सुरतोत्सवे ।
शृङ्गारशास्त्रतत्त्वज्ञैः सा हेला परिकीर्तिता[९] ॥७१॥

यथा—

आसज्य स्वयमेव चुम्बनविधिं[१०] मायां विनाऽऽलिङ्गनं
तल्पान्ते जघनेन वेपथुमती[११] पर्यापणं जानुनोः[१२] ।
[१३]क्रोधोक्तं मम [१४]मर्षयेत्यनुनयैस्तन्वी स्मरक्रीडया
प्रौढेच्छाभिरतिः प्रियस्य हृदयं [१५]हेलाबलात् कर्षति ॥७२॥

[Nāgara. 13. 6; quoted in Nāṭaka. p. 112]

पुरुषे यथा –

उत्तिष्ठन्त्या रतान्ते भरमुरगपतौ [१६]पाणिनैकेन कृत्वा
धृत्वा चान्येन वासो विगलितकबरीकेशपाशं[१७] वहन्त्या ।
भूयस्तत्कालकान्ति[१८]-द्विगुणितसुरतप्रीतिना शौरिणा वः
शय्यामालिङ्ग्य नीतं वपुरलसलसद्बाहु लक्ष्म्याः पुनातु ॥७३॥

[Veṇī. I. 3]

[॥इति हेला]

[१] A. ०हत०  [२] L. सपादि  [३] K. L. शवरकरोऽयं
[४] A. कंकेलि०, K. L. कः केलि०  [५] A. अत अमार०
[६] L. ०र्यत् (adds अनुस्वार)  [७] L. हलेति
[८] K. L. प्रौढे० (प्रौढेश्छाया० can be a possible reading). A. प्रौढछायानिरूढानां
[९] L. adds विसर्ग  [१०] Original विधिर्योज्यं विना०
[११] Ibid. वेपथुमथापर्याणनं जानुनि  [१२] K. L. जानना
[१३] A. क्रोधोयं, K. L. क्रोक्तं (omit ०धो०)
[१४] A. K. L. ०मर्षयत्य०, original मर्षयेत्यनुनयस्तन्व्याः स्मरक्रीडित०
[१५] L. हेलो०  [१६] K. L. वाहु०  [१७] A. omits केशपाशं
[१८] K. L. add अनुस्वार

मदो यथा—

मधुपानमदप्रायस्तारुण्यातिशयोद्भवः ।
विकारो यो वरस्त्रीणां तं वदन्ति [१]मदं बुधाः ॥७४॥

यथा

आलाप[:]स्मितकौमुदीसहचरो[२] दृष्टिः[३] प्रहर्षोल्लसद्-
भ्रूनृत्याध्वरदीक्षिता चरणयोर्न्यासः समे भङ्गुरः ।
[४]वेशेषु क्षणिकस्पृहा मदविधावद्वैतवातश्च त[त्]
[५]तन्व्या नैकविकारसूर्मधुमदप्रायो[६] मदः[७] स्फूर्जति ॥७५॥

[॥ इति मदः ॥]

मौग्ध्यं यथा—

बाल्ये गते वचोभङ्गी[८] रामाणां [९]कान्तसन्निधौ ।
[१०]हारमौक्तिकमायायां[११] तन्मौग्ध्यं परिकीर्तितम् ॥७६॥

यथा—

के ते वृक्षाः[१२] क्व [१३]वारूढा[:] किं मया(?) केन रोपिताः[१४] ।
नाथ ! मत्कङ्कणे न्यस्तं येषां मुक्ताफलं फलम् ॥७७॥

[Nāgara. 13. 32; quoted in Nāṭaka. p. 112]

[यथा वा—]

यदि चूतस्य मञ्जर्यां सख्या सन्निहितः स्मरः ।
भग्नायां तत्कथं सोऽस्यां मनागपि न दृश्यते ॥७८॥

[यथा वा—]

सत्यं किमन्यदेशेऽपि [१५]विद्यते मृगलाञ्छनः[१६] ।
एवमादि वचो बाल्ये व्यतीते मौग्ध्यमुच्यते ॥७९॥

यतः प्रवृ(भृ)त्यहं सख्यः [१७]शिरीषकुसुमैर्हता[१८] ।
ततः प्रभृति मे शूलं हृदीदं [१९]मौग्ध्यमीरितम्[२०] ॥८०॥

आचार्यस्तु स्त्रीणां स्वभावमेव मौग्ध्यं [२१]मनुते ।

[॥ इति मौग्ध्यम् ॥]

---

[१] K. मुदं [२] K. L. ०चरी [३] A. दृष्टि, K. L. दृष्ट
[४] A. वेशे दक्षिणकस्पृहा [५] K. L. ०तन्वानेक० [६] A. ०प्राये
[७] A. omits विसर्ग [८] A. ०भंगि, K. L. ०भृङ्गी [९] A. K. L. कांति०
[१०] K. हारि०, L. हेरि० [११] K. L. ०मयि यावत् [१२] A. L. omit विसर्ग
[१३] A. वार्तेपा या किंवा केन योपिता
[१४] The original reading of this line is—
के द्रुमास्ते क्व वा ग्रामे सन्ति केन प्ररोपिताः ॥
[१५] K. विद्यंते [१६] L. ०लानं
[१७] L. संशरीष [१८] K. ०मैर्हताः, L. ०मेर्हताः [१९] L. मोग्ध्य०
[२०] A. ०मीरिति [२१] A. K. L. मन्यते



चाटु यथा—

शर्मपूर्वा भवेदुक्तिः सुप्रयुक्ता क्रियाऽथवा ।
[१]तथा चेतोहरा भर्तुश्चाटु भावविदो विदुः ॥८१॥

यथा—

आपाणिग्रहणाद्देवि ! दासस्ते दशकन्धरः ।
अयं लाक्षारसेनाद्य पादौ पल्लवयिष्यति ॥८२॥

॥ इत्यभिनन्दः[२](?) ॥ [॥इति चाटु॥]

हावो यथा—

[३]सबाष्पगद्गदालापः[४] [५]सस्मितापाङ्गवीक्षितम् ।
[६]प्रेम दाक्षिण्यवृत्तिश्च तरुण्या हाव इष्यते ॥८३॥

शाक्यस्तु[७]—

स्मिताक्षिभ्रूविकारो यः शृङ्गाराकार[८]-सूचकः ।
[९]मन्मथावेशको ज्ञेयो हावश्चित्तसमुत्थितः ॥८४॥

शणिस्तु—

प्राप्तेषु शृङ्गारसमाह्वयेषु [१०]तन्व्यास्तु कामाङ्कुरचिह्नभूतम् ।
उत्पद्यते यत् स्मितवीक्षितं च यदोपवक्त्रं कथितः स हावः[११] ॥८५॥

मन्मथावेशक[१२]-श्चक्षुर्विकारो यथा—

स्पर्शभाजि विशदद्युति[१३]-चारौ कल्पिते मृगदृशां सुरताय ।
संनतिं दधति[१४] पेतुरजस्रं दृष्टयः प्रियतमे शयने च ॥८६॥

[ Śiśupāla. 10. 39 ]

[१५]एवमन्यदुदाहार्यं हावेष्वयं[१६] विशिष्यते ॥८७॥

[ ॥इति हावः॥ ]

अल्पता यथा—

अल्पता[१७] कथिता सा तु प्रियस्यागमने सति ।
इच्छा-[१८]पूर्तेरभावेन यदि वाऽन्याऽप्यलंकृतिः ॥८८॥

यथा माघे—

न मनोरमास्वपि विशेषविदां निरचेष्ट योग्यमिदमेतदिति ।
गृहमेष्यति प्रियतमे सुदृशा [१९]वसनाङ्गरागसुमनः[२०]-सु मनः ॥८९॥

[ Śiśupāla. 9. 50 ]

[ ॥इत्यल्पता॥ ]

---

[१] L. अथा चेतोह (omits ०रा) [२] A. ०नव
[३] K. L. स्व० [४] A. omits विसर्ग [५] A. संगता०
[६] K. L. प्रम० [७] K. L. ०थुः [८] L. ०कर०
[९] A. तन्म० [१०] K. L. तन्वास्तु [११] A. हारः
[१२] A. ०चक्षु० [१३] Original ०च्छवि [१४] K. L. दधतु
[१५] A. एवमन्यप्युदाहार्यं, K. L. वमन्युदप्युहादार्यं [१६] A. हावेषु कथं
[१७] K. L. add यथा [१८] A. ०पूर्वे० [१९] A. वास०
[२०] K. L. ०ना

विक्षेपो यथा—

अन्यथा वेषविन्यासो विकाराद्[१] यो भवेत् स्त्रियः[२] ।
तमामनन्ति [३]विक्षेपं श्रीशाक्यकपिलादयः ॥९०॥

यथा—

चकार काचित् मितचन्दनाङ्कं[४] काञ्चीकलापं स्तनभारपृष्ठे ।
प्रियं प्रति प्रेषितचित्तवृत्ति-र्नितम्बबिम्बे[५] च [६]बबन्ध हारम् ॥९१॥[७]

पूगरागोऽक्षिपुटयो[८]-र्यावको वक्त्रमूर्धनि ।
अजानन्त्या कया नाथ मण्डयन्त्या विडम्बितः ॥९२॥

[ ॥इति विक्षेपः॥ ]

परिहासो यथा—

प्रेमखेला-समारब्धमुद्दाम[९]-रतिवर्धनम् ।
[१०]अन्योन्यहसितं सद्भिः परिहासो मुनेर्मतः[११] ॥९३॥

यथा—

सुभग कुरवकस्त्वं[१२] किं[१३] समालिङ्गनोत्कः[१४]
किमु मुखमदिरेच्छुः [१५]केशरो नो हृदिस्थः[१६] ।
त्वयि नियतमशोके युज्यते पादघातः
प्रियमिति परिहासात् पेशलं काचिदूचे ॥९४॥

[ ॥इति परिहासः॥ ]

भावो यथा—

कान्तस्य दृष्टिपथतस्तिरोधातुमिवेच्छति ।
लज्जयाऽधोमुखी मुग्धा [१७]तिर्यग् विक्षिप्तलोचना ॥९५॥

प्रियं पश्यत्यतिशयजातरोमाञ्चकञ्चुका[१८] ।
तत्क्षणोद्भूतमदनाचार्य-[१९]शिष्योपदेशतः ॥
[२०]या तस्यां जायते चेष्टा स भावः[२१] शाक्यसम्मतः ॥९६॥

[१] L. ०राद्  [२] A. ०याः, K. L. ०या  [३] L. विक्षपं
[४] A. ०नांके, K. L. नाकां  [५] L. ०बिबे  [६] K. L. कबन्ध
[७] K. L. number this verse as 58, whereas the previous verse bears the number 84. The next verse is again numbered as 85. Similarly, numbers 80, 83 are omitted. No. 86 is given for two verses following 85.
[८] L. ०पुटया०  [९] A. ०मुदमे  [१०] L. अन्येन्य०
[११] L. ०ताः  [१२] K. L. ०कत्वं  [१३] K. L. नो किमालिंग०
[१४] A. L. ०क्तः  [१५] K. L. केसरो  [१६] L. ०स्वः
[१७] A. तीयग्, K. L. तियग्  [१८] K. L. add विसर्ग
[१९] K. L. ०शिक्षो०  [२०] K. L. यत्तस्यां  [२१] K. L. भावं



माघे यथा—

अवनतवदनेन्दुरिच्छतीव व्यवधिमधीरतया [१]यदस्थिताऽस्मै ।
अहरत सुतरामतोऽस्य[२] चेतः स्फुटमभिभूषयति स्त्रियस्त्रपैव ॥९७॥

[ Śiśupāla. 7. 38 ]

[ ॥इति भावः॥ ]

व्याजो[३] यथा—

सत्यभीष्टार्थ[४]-संप्राप्तौ[५] चौत्सुक्यात्[६] तरलं मनः ।
गोपितुं[७] क्रियते याऽन्या चेष्टा व्याजः स भारते[८] ॥९८॥

यथा कालिदासः—

इति(एवं) वादिनि देवर्षौ पार्श्वे पितुरधोमुखी ।
लीलाकमलपत्राणि गणयामास पार्वती ॥९९॥

[ Kumāra. 6. 84 ]

[९]शाक्योऽपि—

अनुरागतः [१०]प्रवृद्धिः[११] क्रियते स्त्रीभिर्यदन्यदपदिश्य ।
चुम्बनमाश्लेषौ(षो) वा व्याजः स तु कीर्तितः[१२] कृतिभिः ॥१००॥

[१३]शणिस्तु—

प्रियायाः प्रथमालोके यद्वा[१४] प्रियतमस्य च ।
तत्क्षणोद्भूतमदन[१५]-विकाराकारसंवृतौ[१६] ॥
क्रियते याऽन्यमाश्रित्य चेष्टा व्याजः स विश्रुतः ॥१०१॥

[१७]वात्स्यायनः—

व्याजादेव हि कर्तव्यं चुम्बनालिङ्गनादिकम् ।
चापलं लाघवं धार्ष्ट्यमाह[१८] रत्यान्यथाकृतम् ॥१०२॥

[ ॥इति व्याजः॥ ]

इङ्गितं यथा—

हृदयावेदकः कोऽपि विशेषश्चेष्टितस्य यः ।
तदिङ्गितमिति प्रोक्तं मुनिना हाववेदिना ॥१०३॥

[१] A. यदि  [२] K. L. ०न्य०
[३] K. L. ०जौ  [४] A. ०ष्टाप्त०, K. L. ०ष्टार्यं०
[५] A. K. ०संप्राप्ता०, L. संप्रा०  [६] K. L. ०योत्तरलं
[७] L. गोपितुः  [८] A. adds विसर्ग
[९] A. omits शाक्योऽपि  [१०] A. omits प्र०
[११] A. ०द्धि, K. L. ०द्धी  [१२] A. omits विसर्ग
[१३] K. L. शिणि०  [१४] K. L. यदा
[१५] K. L. ०मदनः  [१६] L. ०तौ
[१७] K. L. कात्यायनोऽपि  [१८] A. ०महा

यथा--

[1]तरल-[2]तारालिङ्गनव्यङ्ग्येनात्मीयमिङ्गितं दिशता ।
नयनेन तु [3]नववध्वा न च [खलु]गन्ताऽपि वीक्षितः पथिकः ॥१०४॥

[॥ इतीङ्गितम् ॥]

प्रतिभेदनं यथा –

अत्र सूत्रकृत —

वचसाऽनभिधायैव ज्ञापनं क्रिययैव यत् ।
वध्वा[4] प्रियापराधस्य भवेत्तत्प्रतिभेदनम् ॥१०५॥

यथा कालिदासः –

स्वप्न-[5]वीक्षितविपक्षमङ्गनाः[6] प्रत्यभैत्सुरवदन्त्य एव तम् ।
[7]प्रच्छदान्तगलिताश्रुबिन्दुभिः क्रोधभिन्नवलयैर्विवर्तनैः[8] ॥१०६॥

[Raghu. 19. 22]

अत्र प्रत्यभैत्सुरिति प्रतिभेदनं कृतवत्य इति व्याख्येयम् ।

यथा माघः—

[9]प्रतिभिद्य कान्तमपराधकृतं यदि तावदस्य [10]पुनरेव मया ।
क्रियतेऽनुवृत्तिरुचितैव ततः [11]कलयेदमानमनसं सखि माम् ॥१०७॥

[Śiśupāla. 9. 58]

[॥ इति प्रतिभेदनम् ॥]

आकारो यथा –

आकृत्या सूच्यते यस्तु स आकारो मुनेर्मतः ॥१०८॥

यथा—

यदि [12]नास्ति वल्लभोऽसौ नामग्रहणादमुष्य ते भवति ।
कथमिदमाननपद्मं रविकरलम्भादिवोत्फुल्लम् ॥१०९॥

[ ॥इत्याकारः॥ ]

इति[13] (अथ) [14]चित्तस्खलितम्—यथा—

अन्यासक्ति-[15]वशाच्चेतो मूढत्वादन्यथा[16]-कृतिः ।
चित्तस्खलितमित्याहुर्मुनयो भरतादयः ॥११०॥

[1] A. K. L. add ०तर after तरल०
[2] K. L. ०तारलगिमचांगनात्मीय० [3] L. omits न०
[4] A. adds विसर्ग [5] Original कीर्तित०
[6] K. L. omit विसर्ग [7] K. L. पृ०
[8] A. ०वलयैस्तु चेष्टितैः, K. L. वलयैश्च (L. वलायेश्चः चेष्टितैः)
[9] A. K. L. प्रतिभेद्यं [10] L. पुनारव [11] A. कलयेमपमान
[12] A. ते[ऽ]स्तु [13] K. L. omit इति
[14] A. omits चित्त० [15] L. वशाच्चातो [16] K. L. ०दन्यता०



यथा—

कान्तवेश्म बहुसं[1]-[2]दिशतीभिर्यातमेव रतये रमणीभिः ।
मन्मथेन परिलुप्तमतीनां[3] प्रायश[ः] स्खलितमप्युपकारि ॥१११॥

[ ॥इति चित्तस्खलितम्॥ ]

कुतूहलं यथा सूत्रकारः—

अनुरागकाल एव[4] गवेषणीयो निर्वचाशङ्कया ।
अन्येषां हृदि प्रियतमोपसर्पणं कुतूहलम् ॥११२॥

यथा—

पाराप(व)त इवानङ्गमोहिते कूजति प्रिये ।
पश्य कौतुकिनी[5] जाया समीपमुपसर्पति ॥११३॥

[ ॥इति कुतूहलम्॥ ]

[6]क्रीडनं यथा

बाल्य एव कुमारीणां यौवनोपरिखेलनम् ।
शृङ्गारशास्त्रतत्त्वज्ञैः क्रीडितं[7] तदुदाहृतम् ॥११४॥

यथा –

अनाकूतैरेव प्रियसहचरीणां[8] शिशुतया
वचोभिः पाञ्चालीमिथुनमधुना संगमयितुम् ।
उपादत्ते नो वा विरमति [9]न वा केवलमियं
कपोलौ कल्याणी पुलकमुकुलैर्दन्तुरयति ॥११५॥

[ Śārṅgadhara. 3289 ]

[ ॥इति क्रीडनम्॥ ]

अथ प्रेमाभिसन्धिर्यथा—

[10]विपक्षसंज्ञयाऽऽह्वानादीर्ष्याऽतिशयसंभवम् ।
स्त्रीणां प्रेमाभिसन्धानं दुःखदं मरणादपि ॥११६॥

[1] K. L. ०शं०
[2] A. दिशतीभिर्यातवद०
[3] A. omits ०मतीनां, L. ०मभीनां
[4] K. L. एवा followed by प्रियतमोप० etc. (गवेषणीयो……………हृदि is omitted)
[5] L. ०किनी
[6] K. क्रीडनकं, L. क्रीडनं था (omits य०)
[7] L. क्रीडीतं
[8] L. ०चणीणां
[9] L. जवा
[10] K. L. विवक्ष०

इति शाक्यानुमते

किराते—

प्रयच्छतोच्चैः कुसुमानि मानिनी[1]
विपक्षगोत्रं[2] दयितेन लम्भिता ।
[3]न किंचिदूचे[4] चरणेन केवलं[5]
लिलेख बाष्पाकुललोचना भुवम् ॥११७॥

[ Kirāta. 8. 14 ]

[ ॥इति प्रेमाभिसन्धिः॥ ]

संवृतिर्यथा—तत्र सूत्रकृत्

प्रिय[ा]संभाषणा[ल्]लोके परोद्भेदाभिशङ्कया ।
स्वाकारगोपनं यत्तु सा बुधैः संवृतिः[6] स्मृता[7] ॥११८॥

यथा—

वीक्ष्य मां पथि साऽकस्मात् [8]सस्मितापाङ्गवीक्षणम् ।
निर्वचा शङ्कयाऽन्येषां हृदि स्यूतेव मे [9]प्रिया ॥११९॥

[ ॥इति संवृतिः॥ ]

चकितं यथा—

[10]त्रासेन लज्जया वापि निजवल्लभसन्निधौ ।
संभ्रमातिशयो [11]यश्च चकितं[12] सूत्रकृन्मते ॥१२०॥

त्रासेन यथा—

परिस्फुरन्मीनविघट्टितोरवः
सुराङ्गनास्त्रासविलोलदृष्टयः ।
उपाययुः कम्पितपाणिपल्लवाः
सखीजनस्यापि विलोकनीयताम् ॥१२१॥

[ Kirāta. 8. 45 ]

---

[1] L. मारीनि [2] L. ०गोत्रे

[3] In L. there is a change in handwriting on folio 44 (623) biginning with न किंचिदूचे. The changed handwriting continues upto folio 45 (624) ending with अवस्थाद्वयसंपन्नो भावो बी० of verse 11 of the next परीक्षण.

[4] L. ०दूचिरे [5] L. omits अनुस्वार

[6] A. omits विसर्ग, L. ०निः

[7] L. adds विसर्ग

[8] L. सा० [9] L. पिया

[10] L. omits त्रा and leaves blank space for one letter.

[11] K. L. यस्तु [12] L. ०तः



लज्जया यथा—

अभिमुनि [1]सहसा हृते परस्या घनमरुता जघनांशुकैकदेशे ।
चकितमवसनोरु[2] सत्रपायाः प्रतियुवतीरपि विस्मयं निनाय ॥१२२॥

[ Kirāta. 10. 45 ]

[ ॥इति चकितम्॥ ]

सखीविश्रम्भकथितं[3] यथा—तत्र सूत्रकारः[4]—

[5]सख्या सखीषु [6]विश्वासकथनं क्रियते हि यत् ।
विविक्ते यत्तु (तत्तु) विश्रम्भकथनं समुदाहृतम् ॥१२३॥

यथा—

समायाते कान्ते कथमपि [7]च कालेन बहुना
कथाभिर्देशानां सखि रजनिकार्धं[8] गतवती ।
ततो यावल्लीलाकलहकुपिताऽस्मि प्रियतमे
सपत्नीव[9] प्राची दिगियमभवत्तावदरुणा[10] ॥१२४॥

[ ॥इति सखीविश्रम्भकथितम्॥ ]

अनुतापो यथा मुनिराह

क्षणमात्रमदृष्टे या प्रिये संतापसंततिः ।
विरहोत्थेव कामिन्या[ः] [11]सोऽनुतापो विधीयते ॥१२४॥

यथा

उपवनमुपयाति वल्लभेऽपि
श्वसितघनाश्रु-[12]विलोचनं बिभर्ति ।
चिरविरहमवाप्य तस्य मन्ये
परितप्ता[13] विजहाति जीवमेव ॥१२५॥

[॥ इत्यनुतापः ॥]

---

[1] A. K. L. सहसोद्गते (A. adds विसर्ग)

[2] L. adds च [3] K. L. ०कथन

[4] A. L. ०कारा:

[5] K. omits this verse. L. writes it at the bottom of the folio indicating the location of the verse with a ᳲ--like sign.

[6] L. विश्वासः [7] L. omits च

[8] K. रजनिरर्धं

[9] L. सपत्नी प्राचीव [10] A. ०णां

[11] L. ०स्मो०

[12] L. omits वि०

[13] A. L. ०तपता

यस्मिन् प्रेमाभिसन्धि[1] विदधति[2] सकला[3] राजकन्या[:] क्रमेणा-
यस्यास्ताः [4]सम्यगाप्त्वाऽनुभवमपि[5] परं कामरागेऽनुभूय ।
भूयो भूयः[6] पितस्ते न[7] खलु वयमिदं प्रार्थनां[8] कर्तुमीशा
राजानं प्राप्नुयामस्तमिह कुरु तथा [9]कालसेनं महीन्द्रम् ॥१२६॥

*इति श्रीराजाधिराज-कालसेन—महीमहेन्द्रेण विरचिते संगीतराजे षोडशसाहस्र्यां संगीतमीमांसायां रसरत्नकोशे अनुभावोल्लासे अनुभावपरीक्षणं [प्रथमं] समाप्तम् ॥

---

[1] A. L. omit अनुस्वार
[2] A. L. ०धत
[3] A. L. add अनुस्वार
[4] L. सम्यक् ज्ञात्वा०
[5] A. L. ०मुभयपरि (L. omits ०प०)
[6] K. भूयो वयस्थेन
[7] L. repeats न
[8] A. L. omit अनुस्वार
[9] K. कुम्भकर्ण

* K. reads the colophon as follows. This long colophon is an unusual feature with regard to a परीक्षण other than that marking the end of an उल्लास. The changed handwriting in L. replaces this colophon, in matching length, with epithets of Kālasena. This is a notable instance of the planned drive for changing the name and epithets of the author in long colophons in L.

K. इति श्रीसरस्वतीरससमुद्भूत-कैरवोद्याननायकेन अभिनवभरताचार्येण मालवाम्भोधिमाथमन्थमहीधरेण अजयमेरुजयाजेयविभवेन यवनकुलाकालकालरात्रिरूपेण शाकम्भरीरमणपरिशीलनपरिप्राप्त-शाकम्भरीतोषित-शाकम्भरीप्रमुखशक्तित्रयेण नागपुरोद्धूलनर्धाषितनागपुरेण अर्बुदाचलग्रहणसंदर्शिताचलाद्भुतप्रतापेन गूर्जराधीशधीरत्वोन्मूलनप्रचण्डपवनेन श्रीमत्कुम्भलमेरुनवीननिर्मितसुमेरुणा श्रीचित्रकूटभौमस्वर्गता (K. ०स्वर्गीकृता)-याथार्थीकरणरचितचारुतरपथेन प्ररूढपत्रयवनदवदहनदावानलेन मेदपाटसमुद्रसंभवरोहिणीरमणेन अरिराजमत्तमातङ्गपञ्चाननेन प्रत्यर्थिपृथिवीपति-तिमिरततिनिराकरणप्रौढप्रतापमार्तण्डेन वैरिवनितावैधव्यदीक्षादानदक्षोद्दण्डकोदण्डदण्डमण्डिताखण्डभुजादण्डेन भूमण्डलाखण्डलेन श्रीचित्रकूटविभुना अध्युष्टतमनरेश्वरेण गजनरतुरगाधीशराजत्रितयतोडरमल्लेन वेदमार्गस्थापनचतुराननेन याचककल्पनाकल्पद्रुमेण वसुन्धरोद्धरणादिवराहेण परमभागवतेन जगदीश्वरीचरणकिंकरेण भवानीपतिप्रसादाप्तापसादप्रसादेन राजगुर्वादिविरुदावलीविराजमानेन राजाधिराजमहाराण[ा]श्रीमोकलनन्दनेन इति श्रीराजाधिराजश्रीकुम्भकर्ण-महीमहेन्द्रेण विरचिते संगीतराजे षोडशसाहस्र्यां संगीतमीमांसायां रसरत्नकोशे अनुभावकोल्लासे अनुभावपरीक्षणं समाप्तम् ॥

L. इति श्रीजगदीशवनदेवनिजगणेन जगदीश्वरीकामेश्वरीचरणकिङ्करेण श्रीब्रह्माद्रिविभुना अध्युष्टतमनरेश्वरेण भीष्मपुरजयानीतानेकराजकन्यारत्नेन श्रीपुरग्रहणसंवर्धितयशोभरेण वाटिकाचलग्रहणजनितकीर्तिपूर-पराजिताचलनायकेन संगमनीरदुर्गोद्धरणोद्धृत-सकलमण्डलाधीश्वरेण मदनपुरविध्वंसनबन्दीकृतयवनीनिचयेन महिषमेरुजयाजेयविभवेन शाकम्भरीरमण-



परिशीलनपरिप्राप्त-शाकम्भरीपरितोषित-शाकम्भरी-प्रमुखशक्तित्रयेण अष्टादशगिरिशिखरपरिवारिताञ्जनाद्रिविजयविख्यातवीर्यगर्वेण महदम्बमातृकापुरोद्धूलनर्धाषितमहोरगपुरेण श्रीवनदेवस्वामि-प्र[ा]सादरचनापर-परमे[श्वरेण] त्र्यम्बकेश्वरसन्निधि-कीर्तिस्तम्भोन्नतजयस्तम्भेन श्रीब्रह्मगिरिभौम-स्वर्गतायाथार्थीकरणरचितचारुपथेन श्रीकामाक्षागिरिनवीननिर्मितिपराजितसुमेरुणा श्रीमहिषाचलोपरिश्रीहरिशरणरचिताचलदुर्गेण अभिनवभरताचार्येण वीणावादनप्रवीणेन यवनकुलाकालकालरात्रिरूपेण त्रिसन्ध्यक्षेत्रसमुद्रसंभवरोहिणीरमणेन परमभागवतेन महाराजाधिराजमहाराणा-श्रीमृगाङ्कतामराजेन्द्रनन्दनेन महाराज्ञीश्रीसौभाग्यवतीजसमाम्बिकाहृदयनन्दनेन सकलसीमन्तिनीशिरोमणि--निकुम्भराजन्यवंशावतंस-महाराज्ञी श्रीकर्मवतीलखुमादेवीहृदयाधिनाथेन गूर्जराम्भोधिमाथमन्थमहीधरेण गजनरतुरगाधीश-राजत्रितयतोडरमल्लेन वेदमार्गस्थापनचतुराननेन याचकजनकल्पनाकल्पद्रुमेण भवानीपतिप्रसादाप्तापसादप्रसादेन राजगुर्वादिविरुदावलीविराजमानेन इति श्रीमहाराजाधिराजकालसेनमहीमहेन्द्रेण विरचिते संगीतराजे षोडशसाहस्र्यां संगीतमीमांसायां रसरत्नकोशे अनुभावकोल्लासे अनुभावपरीक्षणं प्रथमं समाप्तम् ॥

---

## अवस्थानिरूपणं नाम द्वितीयं परीक्षणम्

*आरोप्यारोपकत्वेन जाग्रदादिभिरेव यः ।
अवस्याभिर्द्वादशात्मा भ्राजते तं भजे शिवम् ॥१॥

अथावस्था निरूप्यन्ते रसावस्थानसूचकाः ।
बीजाङ्कुरौ[1] पल्लवश्च वृद्धिविस्तर एव वा ॥२॥

अवस्थाभिर्विभाव्योऽसौ चक्षूरागादिभिः क्रमात् ॥३॥

बीजानि यथा

कामलेखः सखी दूती नायको [2]नायिका सखी ॥४॥

ताश्च अवस्था यथा –

चक्षुःप्रीतिर्मनःसङ्गः संकल्पोऽपि[3] प्रलापिता[4] ।
जागरः कार्श्यमरतिर्लज्जात्यागोऽथ संज्वरः ॥५॥

उन्मादो मूर्छनं चैव मरणं चरमं विदुः ।
विप्रलम्भे[5] प्रवृद्धे स्युः स्मरस्यैताः क्रमेण हि[6] ॥६॥

[तत्र चक्षुःप्रीतिर्यथा—]

चक्षुःप्रीतिः स्मृता [7]तत्रातीवादरनिरीक्षणम् ॥७॥

यथा—

उत्पत्तिर्देवयजनाद् ब्रह्मचारी नृपः पिता ।
सुप्रसन्नोज्ज्वला मूर्तिस्तत्र स्निह्यति मे मनः ॥८॥

[मनःसङ्गो यथा—]

मनःसङ्गः प्रियतमे[8] नित्यं चित्तस्य विश्रमः ॥९॥

---

* The changed handwriting in L. continues in this परीक्षण upto verse 11; it is notable that the text of this portion in L. agrees with that of K., although at all other similar places it agrees with that of A. The reason, apparently, is that the colophon to the foregoing परीक्षण has been replaced in the changed handwriting of L. with Kālasena-epithets, independently of A. Hence the text in the changed handwriting has lost its link with A.

[1] K. L. ०रो [2] A. K. L. नायका
[3] K. L. ०थ [4] L. adds विसर्ग [5] K. L. ०लम्भो
[6] K. L. तु [7] K. L. तत्रातीतादर० [8] L. ०तेमे

15.9.66



यथा—

एषा मनो मे प्रसभं शरीरात् *पुंसः पदं[1] मध्यममुत्पतन्ती ।
सुराङ्गना कर्षति खण्डिताग्रात् सूत्रं मृणालादिव राजहंसी ॥१०॥

[ Vikramo. I 20 ]

[बीजं यथा – ]

अवस्थाद्वयसंपन्नो भावो [2]बीजमितीर्यते ॥११॥

यथा –

हरस्तु किंचित् परिवृत्तधैर्य-श्चन्द्रोदयारम्भ इवाम्बुराशिः ।
उमामुखे बिम्बफलाधरोष्ठे व्यापारयामास विलोचनानि ॥१२॥

[ Kumāra. 3. 67 ]

[संकल्पो यथा—]

संकल्पस्तु मनोरथः,

[3]"प्रेमार्द्राः प्रणयस्पृशः" इत्यादि ॥[4]

[प्रलापिता यथा—]

,प्रलापो गुणकीर्तनम् ॥१३॥

यथाह भरतः –

[5]संगीतादिगुणैश्चारु विरचय्य स्वयं पदम् ।
[6]यद्गानमनुरागेण तदुक्तं गुणकीर्तनम् ॥१४॥

यथा—

उपात्त-वर्णे चरिते[7] पिनाकिनः सबाष्पकण्ठस्खलितैः पदैर्न्यिम् ।
अनेकशः[8] किन्नरराजकन्यका वनान्तसंगीतसखीररोदयत् ॥१५॥

[ Kumāra. 5. 56 ]

शाक्योऽपि—

प्रयोजने गुणश्लाघा क्रियते याऽभिलापतः[9] ।
प्रियेण प्रियया वापि तदुक्तं गुणकीर्तनम् ॥१६॥

यथा—

सा रामणीयकनिधेरधिदेवता[10] वा
सौन्दर्यसारसमुदायनिकेतनं च ।
तस्याः सखे [11]नियतमिन्दु-सुधामृणाल[12]-
ज्योत्स्नादि कारणमभून्मदनश्च वेधाः[13] ॥१७॥

[ Subhāṣita. 271. 34 ]

---

* Original पितुः [1] L. omits अनुस्वार
[2] The changed handwriting in L. ends with भावो बी० (folio 45, 624) [3] L. प्रेमर्द्राः [4] Mālatī. V. 7.
[5] L. सगीतादिगुणोश्चारु [6] A. K. L. यद्गान० [7] A. K. L. ०वर्णैश्चरितैः
[8] L. omits विसर्ग [9] K. L. ०लापतः [10] A. ०दैवता
[11] A. नयन० [12] A. ०मृणालः [13] K. omits विसर्ग

[यथा वा —]

अनाघ्रातं पुष्पं[1] किश(स)लयमलूनं कररुहै-
रनाविद्धं रत्नं मधु नवमनास्वादितरसम् ।
अखण्डं[2] पुण्यानां [3]फलमिव च तद्रूपमनघं
न जाने भोक्तारं [4]कमिह समुपस्थास्यति विधिः ॥१८॥

[ Śākuntalam 2. 11 ]

॥ अस्मिश्चावस्थाद्वये रसस्य अङ्कुरीभावः ॥

अथ जागरः—

जागरस्तु विनिद्रत्वम्,

यथा —

तद् वक्त्रं नयने च ते स्मितसुधा शुद्धा च तद् [5]वाचिकं
सा वेणी[6] स भुजक्रमोऽतिसरलो लीलालसा [7]सा गतिः ।
तन्वी सेति[8] च सेति सेति सततं ध्यानेन निष्ठात्मना[9]
नो निद्रा न रतिर्न चापि विरतिः[10] शून्यं मनो वर्तते ॥१९॥

॥ अत्रोच्छ्वासनिःश्वासस्मृत्यादयोऽनुभावाः ॥

[11]यथा वा—

हृदयमिषुभिः कामस्यान्तः [12]सशल्यमिदं यतः*
कथमुपगमे निद्रां स्वप्ने समागमकारिणीम् ।
न च सुवदनामालेख्येऽपि प्रियामसमाप्यतां[13]
मम नयनयोरुद्बाष्पत्वं सखे न भविष्यति ॥२०॥

[ Vikramo. II 10 ]

कार्श्यं[14] यथा —

[15]कामक्षामकपोलमाननमुरः काठिन्यमुक्तस्तनं
मध्य[:]क्षामतमः[16] प्रकामविनतावंसौ[17] छविः पाण्डुरा ।
[18]शोच्या च प्रियदर्शना च विरहक्लान्तेयमालक्ष्यते
[19]पत्राणामिव शोषणेन मरुता स्पृष्टा लता माधवी ॥२१॥

---

[1] L. omits अनुस्वार
[2] L. omits अनुस्वार
[3] K. L. फलमनघमस्या वपुरिदं
[4] K. L. किमिह
[5] A. वागियं
[6] A. वीणे
[7] L. omits सा
[8] K. L. omit सेति च
[9] K. L. ०नो
[10] L. omits ०रतिः
[11] A. अथवा, L. omits यथा वा
[12] K. L. सन्नाल्प०
* Original सदा
[13] K. L. तामपि
[14] L. omits अनुस्वार
[15] A. कार्श्यं०
[16] A. omits ०मतमः
[17] A. वंशो
[18] A. शौच्या
[19] A. पत्राणां न विशोपणेन



,अरतिर्विषयान्तरे ।

यथा—

रम्यं[1] द्वेष्टि यथा पुरा प्रकृतिभिर्न प्रत्यहं [2]सेव्यते ।
[3]शय्योपान्तविवर्तनैर्विगमयत्युन्निद्रचन्द्राः क्षपाः[4] ॥२२॥

[ Śākuntalam. VI. 5 ]

यथा वा —

कुसुमशयनं न प्रत्यग्रं न चन्द्रमरीचयो
न च मलयजं सर्वाङ्गीणं न वा मणियष्टयः ।
[5]मनसिजरुजं सा दिव्या वा[6] ममालमपोहितुं
रहसि च भवेदारब्धा वा तदाश्रय(यि)णी [7]कथा ॥२३॥

[ Subhāṣita. 279. 72 ]

इयं च [8]पल्लवावस्था यथा

[9]संभूयेव सुखाय (नि) चेतसि परं भूमानमातन्वते
यत्रालोक-[10]पथावतारिणि रतिं प्रस्तौति [11]नेत्रोत्सवः ।
यद्बालेन्दुकलोच्चयादविरतैः[12] सारैरिवोत्पादितं
तत्पश्येयमनङ्गमङ्गलगृहं भूयोऽपि तस्या मुखम् ॥२४॥

[ Mālatī. V 9 ]

[13]अत्रापि वागारम्भणचित्तोत्कण्ठा-हर्षधृतिप्रमुखा अनुभावा [14]व्यज्यन्ते ।

लज्जात्यागो यथा

ततः सुनन्दा-वचनावसाने लज्जां तनूकृत्य नरेन्द्रकन्या ।
दृष्ट्या प्रसादामलया कुमारं प्रत्यग्रहीत् संवरणस्रजेव ॥२५॥

[ Raghu. 6. 80 ]

यथा वा[15]—

[16]मातः कुलस्थिते सखि लज्जे [17]बद्धोऽयमञ्जलिर्युवयोः ।
आद्वारतोरणान्तं गत्वा परिष्वजे [18]रमणम् ॥२६॥

---

[1] L. omits अनुस्वार
[2] A. omits सेव्यते……………कुसुमशयनं न प्रत्यग्रं
[3] K. L. शय्या०
[4] K. L. क्षिपाः
[5] L. मनसि रुजं
[6] K. L. वनमालमपोहितुं (L. ०मालयापाहितु)
[7] K. L. कं वा
[8] A. वल्लभावस्था
[9] K. L. संघाय च
[10] K. L. एवावतारिणि
[11] L. नेपेत्सवः
[12] Original ०दुपचितैः
[13] K. L. तत्रापि
[14] K. L. त्यज्यंते
[15] K. L. omit वा
[16] K. L. मतेः (in K. ा matra is joined with ०त० instead of म०)
[17] K. L. यद्धो०
[18] A. मरणं

**संज्वरः संतापादि यथा—**

राजन्नर्जुनदेव मूर्तिमदन त्वद्विप्रयोगानल-[१]
ज्वालाजालसमाकुला शशिमुखी पूर्णं सरो गाहते ।
[२]उड्डीनं विहगैर्मृतं [३]तिमिकुलैर्म्लानं च पङ्केरुहै-
स्तोयादानसमागतैश्च कलभैः संकोचितं [४]पुष्करम् ॥२७॥

**इयं [५]च [६]वृद्धावस्था ।**

प्रस्थानं वलयैः कृतं प्रियसखैरस्रैरजस्रं गतं
धृत्या न क्षणमासितं [७]व्यवसितं चित्तेन गन्तुं पुरः ।
यातुं[८] निश्चितचेतसि प्रियतमे सर्वैः समं प्रस्थितं
[९]गन्तव्ये सति [१०]जीवित! प्रियसुहृत्सार्थः किमु त्यज्यते ॥२८॥

[ Amaru. 35 ]

**उन्मादो यथा—**

"क्वाकार्यं शशलक्ष्मण"* इत्यादि ।

**मूर्छनं यथा—**

श्वसिति न वदत्युक्ता[११] यस्या दृशौ विनिमीलिते[१२]
करणनिकरः स्वव्यापारान्[१३] निरस्य सुनिश्चलः ।
स्पृहयति मनस्तस्मै [१४]कस्मैचनापि न वस्तुने
किमिह [१५]करवै जाता [१६]तावद् दशा यदि तादृशी ॥२९॥

**मरणं द्विधा [१७]तद्वियोगस्तच्चेति । [१८]तद्वियोगो यथा—**

अच्छिन्नं[१९] क्षरदश्रु बन्धुषु कृतं चिन्ता *गुरुभ्योऽर्पिता
दत्तं दैन्यमशेषतः परिजने तापः सखीष्वाहितः
अद्य श्वः[२०] परनिर्वृतिं[२१] भजति सा [२२]श्वासैः परं खिद्यते ।
विश्रब्धो भव [२३]विप्रयोगजनितं दुःखं [२४]विभक्तं तथा ॥३०॥ २४

[ Amaru. 110 ]

[१] K. L. ०योगेनल०
[२] L. उड्डनी
[3] L. मिमि०
[४] L. omits पु०
[५] K. L. omit च
[६] K. L. वृद्धयवस्था
[७] L. repeats व्यवसितं
[८] L. omits अनुस्वार
[९] L. गंताव्य
[१०] A. जीवति
* Ascribed to Vikramo. IV 34
[११] L. ०त्युक्ता
[१२] K. L. omit ०मीलिते
[१३] K. L. ०पारं
[१४] K. L. omit कस्मै and read न नापि for च नापि
[१५] K. L. करावे
[१६] L. राव०
[१७,१८] K. L. तदु०
[१९] K. L. omit अनुस्वार
* Original गुरुष्वर्पिता
[२०] K. L. श्चा
[२१] L. ०र्धृतिं
[२२] K. L. साश्वैः
[२३] K. L. ति०
[२४] A. K. L. विसृष्टं



**यथा वा[१]—**

धत्ते चक्षुर्मुकुलित(नि)रणत्कोकिले बालचूते
मार्गे गात्रं क्षिपति बकुलामोदगर्भस्य वायोः ।
स्वेदात् प्रेम्णा सरस-[२]बिसिनीपत्रमात्रोत्तरीया (य)
[स्] ताम्यन्मूर्तिः श्रयति बहुशो मृत्यवे चन्द्रपादान् ॥३१॥

[Mālatī. III 12 ]

**साक्षान्मरणं तु[3] प्रायेण न च वर्ण्यते ।**

**मरणं वपुषो[४] नाशस्तस्यैवेह प्रवर्ण्यते ।**
**पुनर्जीवति यो दैवात् प्रिययोपैति[५] संगमम् ॥३२॥**

**यथा—**

महाश्वेतावियोगाग्नि-संतापादिन्दुमण्डलम् ।
शरीरात् पुण्डरीकस्य निर्गत्य ज्योतिराविशत् ॥३३॥

**अयं तावदवस्थाविशेषो रसविकारः[६] ।**

लीनेव प्रतिबिम्बितेव लिखितेवोत्कीर्णरूपेव च[७]
[८]प्रत्युप्तेव च वज्रलेख-[९]घटितेवान्तर्निखातेव[१०] च ।
सा नश्चेतसि कीलितेव विशिखैश्चेतोभुवः पञ्चभि-
श्चिन्तासन्तति-तन्तुजालनिबिडस्यूतेव लग्ना प्रिया ॥३४॥

[ Mālatī. V 10 ]

अत्र तु [११]वागारम्भणचिन्ताऽऽलस्यादयोऽनुभावा व्यज्यन्ते । अस्मिश्चावस्यात्रये[१२] [१३]सर्वेऽप्यनुभावा भवन्ति ।

**चक्षुःप्रीतिमुखा यस्मिन्नवस्था नृपकन्यकाः ।**
**प्राप्नुवन्ति समाकर्ण्य गुणान् [१४] विश्वमनोहरान् ॥३५॥**

इति श्रीराजाधिराज-[१४]कालसेनमहीमहेन्द्रेण विरचिते संगीतराजे षोडशसाहस्र्यां संगीतमीमांसायां रसरत्नकोशे अनुभावोल्लासे अवस्थानिरूपणं नाम [१५]द्वितीयं परीक्षणं समाप्तम् ॥

[१] A. च
[२] A. विशिनी० K. L. बिशनी०
[३] A. omits तु
[४] L. ०प्ये
[५] L. ०पिति
[६] K. L. ०विस्तारः
[७] K. L. add विसर्ग
[८] A. प्रख्यातेव
[९] L ०पटिते०
[१०] K. L. ०निपातेव चः
[११] K. L. भागारंभाय
[१२] K. L. ०त्रय
[१३] A. सर्वेष्वनु०
[१४] L. omits विश्वमनोहरान्
[१४] K. L. श्रीकुम्भकर्ण०
[१५] K. L. तृतीयं

## सात्त्विकभावा नाम तृतीयं परीक्षणम्

यन्नाम्नः स्मर्तृपुंसो[1] द्विषदवनिभृतां स्तम्भनं स्वेदपूरो[2]
रोमाञ्चप्रोद्गमः[3] स्याद् भयचकितदृशां [4]तत्स्वरस्यैव भङ्गः ।
सर्वाङ्गे[5] वेपथुः[6] स्याद् विकृतिरपि ततो [7]वर्णगाश्रुप्रपातः
[8]सोऽव्यान्मामष्टमूर्तिः प्रलयकृदचिरात्[9] पूर्वगश्चन्द्रचूडः ॥१॥

अथ [10]सत्त्वसमुद्भूतत्वेन अनुभावलक्षणाक्रान्तत्वात्[11] सात्त्विकाः स्तम्भादयोऽनुभावत्वेन लक्ष्यन्ते ॥

यथा—

[12]स्तम्भः स्वेदोऽथ रोमाञ्चः[13] स्वरभङ्गोऽथ वेपथुः ।
वैवर्ण्यमश्रु प्रलय इत्यष्टौ सात्त्विका मताः[14] ॥२॥

[स्तम्भो यथा—]

स्तम्भश्चेष्टाप्रतीघातो भयहर्षानुरागतः ॥३॥

यथा—

अधीराक्ष्याः[15] कटाक्षा वः श्रेयः पुष्णन्तु जिष्णवः ।
युवानस्तत्र तत्रैव यत्पातैर्लिखिता इव ॥४॥

स्वेदो यथा

वपुर्जलोद्गमः स्वेदो रतितापश्रमादिभिः ॥५॥

रत्या यथा—

स्नेहनिर्भरमधत्त वधूनामार्द्रतां वपुरसंशयमन्तः ।
यूनि रागपरिरम्भिणि [16]वस्त्रवनोपमम्बु ववृपे यदनेन ॥६॥
[ Śiśupāla. 10. 49 ]

तापेन यथा

[17]हिमव्यपायाद् विशदाधराणामापाण्डुरीभूतमुखच्छवीनाम् ।
स्वेदोद्गमः किम्पुरुषाङ्गनानां चक्रे पदं पत्रविशेषकेषु ॥७॥
[ Kumāra. 3. 33 ]

---

[1] K. L. omit ०पुंसो
[2] K. L. ०पूर्व
[3] A. omits विसर्ग
[4] K. L. तत्स्वरास्यैव
[5] K. L. ०गैर्वेपथुः
[6] A. omits विसर्ग
[7] K. L. ०वर्णगास्थ०
[8] K. L. स्या०
[9] K. L. ०चिरादेव नित्यैकलिङ्गः
[10] K. L. सर्व०
[11] L. ०त्वा शान्विका
[12] K. L. स्वेदस्तभोऽथ
[13] K. L. omit विसर्ग
[14] cf. N. S. VII 93
[15] K. L. omit विसर्ग
[16] A. K. L. वक्त्रे स्वेद०
[17] K. L. हिमय्यं ज्यायाद्



[श्रमेण यथा—]

कान्तानां कृतपुलकः स्तनान्तराले
वक्त्रेषु च्युततिलकेषु मौक्तिकाभः ।
आसेदे श्रमसलिलोद्गमो विभूषा
रम्याणां विकृतिरपि श्रियं तनोति ॥८॥

अथ रोमाञ्चः—

रोमाञ्चः[1] [2]प्रोद्गमो रोम्णां रोमहर्षादिभिस्तनौ ॥९॥

यथा—

मायद्द्विपेन्द्रमविवेश-[3]भृतायुधस्य
रोमाञ्चिताखिलतनोः शबरेश्वरस्य ।
ज्वालावली वहिरिवास पिशङ्गकेश-
श्मश्रुच्छलेन हृदयान्तर-[4]रोषवह्नेः ॥१०॥

हर्षेण यथा—

प्रेयःकरतलस्पर्श[5]-दोहदैः पुलकोत्करः[6] ।
प्रियागण्डस्थले भान्ति हर्षबीजाङ्कुरा इव ॥११॥

अत्राचार्यः—

यत्र यत्र रसोत्कर्षः[7] श्रूयते दृश्यतेऽपि वा[8] ।
स्वप्रीत्यभिगमेनासौ रोमाञ्चः सर्वभावजः ॥१२॥

स्वरभङ्गो यथा

गद्गदो विस्वरत्वं च वैस्वर्यं प्रमदादिभिः ॥१३॥

यथा—

उन्मादि[9]-कोकिलकुलक्वणनोज्ज्वलानि
संवाद्यमानकुररीगणकूजितानि ।
[10]संभ्रान्तगद्गदविभिन्न-मृदुस्वराणि
चेतो हरन्ति वचनानि सरोरुहाक्ष्याः ॥१४॥

[11]वेपथुर्यथा—

रागरोषभयादिभ्यः कम्पो [12]गात्रस्य वेपथुः ॥१५॥

यथा

मा गर्वमुद्वह [13]कपोलतले चकास्ति
कान्तस्य हस्तलिखिता मम मञ्जरीति[14] ।
अन्यापि किं न सखि भाजनमीदृशीनां
वैरी न चेद्भवति वेपथुरन्तरायः ॥१६॥

[ Quoted in Daśa. 2. 24 as an illustration of स्वाधीनपतिका ]

---

[1] K. L. omit विसर्ग
[2] L. प्र०
[3] K. L. ०वृता०
[4] K. L. दोष०
[5] L. स्पर्शा०
[6] A. ०राः
[7] A. omits ०त्कर्षः
[8] L. च
[9] K. L. ०द०
[10] K. L. सत्रान्तराद्गदितिभिन्न
[11] K. L. omit वेपथुर्यथा
[12] L. गास्य
[13] K. L. कणाल०
[14] A. ०भिः

16.9.66.



[1]रागाद् यथा—

वारं वारं [2]त्वरयति दृशोरुद्गमं बाष्पपूर्णं
[3]तत्संकल्पोपगतजडिमस्तम्भमभ्येति गात्रम् ।
सद्यः [4]स्विद्यन्नयमविरलोत्कम्पलोलाङ्गुलीकः[5]
[6]पाणिर्लेखा विधिषु नितरां वर्तते किं करोमि ॥१७॥

[ Mālatī. I 38 ]

रोषाद् यथा—

पाहीति वदतो भर्तुः स्वयं दृष्टागसः प्रिया ।
पादेऽपि पततो नाहं क्रुद्धा कम्पोत्तरोत्तरम् ॥१८॥

भयाद् यथा—

क्षिप्तपुष्पशयने[7] लतागृहे [8]नित्यदूतिकृतमार्गदर्शनः ।
अन्वभूत् परिजनाङ्गना-रतिं सोऽवरोधभयवेपथूत्तरम् ॥१९॥

वैवर्ण्यं यथा—

[9]विषादमदरोषादेर्वर्णान्यत्वं विवर्णता ॥२०॥

यथा—

परिमृदितमृणाली[10]-म्लानमङ्गं [11]प्रवृत्तिः
कथमपि परिवारप्रार्थनाभिः[12] क्रियासु ।
कलयति च हिमांशो-[13]र्निष्कलङ्कस्य लक्ष्मी-
मभिनवकरिदन्तच्छेदपाण्डुः कपोलः ॥२१॥

[ Mālatī. I 25 ]

[मदाद् यथा—]

त्वदर्पितदृशस्तस्या [14]गीतगोष्ठ्यामवर्धत ।
[15]उद्दामरागतरला छाया [16]कापि मुखाम्बुजे ॥२२॥

[17]दण्डिनो यथा

मदरक्तकपोलेन मन्मथ-स्त्वन्मुखेन्दुना ।
[18]नर्तितभ्रूलतेनालं मर्दितुं भुवनत्रयम् ॥२३॥

---

[1] A. रागे, K. L. रोगाद्
[2] Original तिरयति दृशावुद्गतं बाष्पपूरस्तत॰
[3] K. L. ॰स्तत्  [5] K. L. स्विद्यन्नयन॰
[4] K. L. ॰काः  [6] A. पाणे॰  [7] K. L. ॰नो
[8] A. नृत्य॰  [9] K. L. विषाद॰
[10] K. L. ॰सुपोल्लीलान॰  [11] L. omits ॰प्र॰
[12] A. omits विसर्ग  [13] K. L. ॰निःकलंकस्य
[14] K. L. नीत॰  [15] K. L. तद्दाम॰  [16] K. L. क्वापि
[17] This reference to दण्डिन् is obscure.
[18] A. नर्तितः भ्रूतलेनालं



रोषाद् यथा—

सलीलमाक्रम्य गिरेर्भुवं[1] क्रुधा विलोलितप्रस्फुरदश्रुकेसरः[2] ।
कराभिघातैर्विददार रंहसा तमःकरीन्द्रं शशिकेसरीश्वरः ॥२४॥

आदिशब्दाद्[3] विरहमरणयोर्ग्रहणम् ।

विरहाद् यथा—

कुवलयदलश्यामोऽप्यङ्गं दधत् परिधूसरं
ललितविकटन्यासः श्रीमन्मृगाङ्कनिभाननः ।
[4]हरति विनयं रामो यस्य प्रकाशितसाहसः
परिगलदसृक्पङ्कः पाणिर्गलन्नलजाङ्गलः ॥२५॥

मरणे यथा—

पतिरङ्कनिषण्णया तया करणापायविभिन्न-[5]वर्णया ।
समलक्ष्यत बिभ्रदाविलां[6] मृगलेखामुषसीव चन्द्रमाः ॥२६॥

[ Raghu. 8. 42 ]

अश्रु यथा—

अश्रु नेत्रोद्भवं वारि तद् दुःखक्रोधहर्षजम् ॥२७॥

यथा—

शशाम [7]वृष्टिर्मेघानामुत्सङ्गे तस्य भूभृतः ।
[8]विरराम न रामस्य धारासंततिरश्रुणः ॥२८॥

[यथा वा—]

एतद्गिरेर्माल्यवतः पुरस्तादाविर्भवत्यम्बरलेखि[9] शृङ्गम्[10] ।
नवं पयो यत्र घनैर्मया च त्वद्विप्रयोगाश्रु समं विसृष्टम् ॥२९॥

[ Raghu. 13. 26 ]

यथा वा—

एतस्मिन् मदकलमल्लिकाक्षपक्ष[11]-
व्याधूतस्फुरदुरुगण्डपुण्डरीकाः ।
[12]बाष्पाम्भःपरिपतनोद्गमान्तराले
संदृष्टाः कुवलयिनो मया विभागाः ॥३०॥

[ Uttara. I 31 ]

प्रलयो यथा—

प्रलयो रागदुःखादेरिन्द्रियास्तमयो मतः ॥३१॥

---

[1] L. ॰र्भुवय  [2] A. ॰दशुकेसरः
[3] A. omits ॰शब्दाद् विरह॰, leaving blank space.
[4] A. omits हरति विनयं, leaving blank space.
[5] K. L. ॰यातया  [6] K. L. omit अनुस्वार
[7] A. वृष्टे॰  [8] A. विराराम
[9] L. लेवि  [10] A. शृंगी
[11] A. K. L. ॰काक्षिपक्षि॰  [12] A. K. L. बाष्पान्तः

[१]यथा—

प्रेमार्द्राः प्रणयस्पृशः परिचयादुद्गाढरागोदया-
स्तास्ता मुग्धदृशो निसर्गमधुराश्चेष्टा भवेयुर्मयि[२] ।
यास्वन्तःकरणस्य[३] बाह्यकरणव्यापाररोधी क्षणा-
दाशंसापरिकल्पितास्वपि भवत्यानन्दसान्द्रो लयः ॥३२॥

[ Mālatī V. 7 ]

यथा वा[४]—

तीव्राभिषङ्गप्रभवेण वृत्तिं मोहेन संस्तम्भयतेन्द्रियाणाम् ।
अज्ञातभर्तृव्यसना मुहूर्तं कृतोपकारेव रतिर्बभूव ॥३३॥

[ Kumāra. 3. 73 ]

एतेऽष्टौ सात्त्विका भावा मया सम्यङ् निरूपिताः ॥३४॥

एतेषां सात्त्विकत्वं सत्त्वपरिणतान्तःकरणजायमानत्वात् । निरूपितमेव प्रागेव । तथाहि ॥ त्रिधा चित्ते परिणतिः सात्त्विकी राजसी तामसी चेति । तल्लक्षणं यथा

"सत्त्वं लघु प्रकाशकमिष्टमुपष्टम्भकं चलं च रजः ।
गुरु वरणकमेव तमः प्रदीपवच्चार्थतो[६] [७]वृत्तिः ॥३४॥"

[ साङ्ख्यकारिका १३ ]

[८]इत्यादिना [९]लघुतया प्रकाशितया चानुकूलावस्थादन्तःकरणादेतेषां जन्मना भावविषये कथं सात्त्विकी [१०]प्रवृत्तिरिति वाच्यम् । उच्यते । [११]सर्वजगतः सुखदुःखमोहात्मकत्वेन तद्विद्भिरभ्युपगमात् ।

यः संस्तम्भयति क्षणात् प्रतिभटान् स्वेदार्द्रपाणीन् रणे
रोमाञ्चोत्कटकञ्चुकः[१२] स्वर- रवै-[१३]र्भङ्गप्रदो वाद्यगैः ।
[१४]यन्नाम्ना[१५] वेपथुः स्याच्छ्रवणपथगतादन्यवर्णा मुखाब्जे
[१६]नेत्रश्री-स्तेन भावाः प्रलयविधिविदा[१७] वैरिणां निर्मितास्ते ॥३५॥

इति श्रीराजाधिराज-[१८]कालसेन-महीमहेन्द्रेण विरचिते संगीतराजे षोडशसाहस्र्यां संगीतमीमांसायां रसरत्नकोशे अनुभावोल्लासे सात्त्विकभावपरीक्षणं तृतीयं समाप्तम् ॥

---

[१] K. L. omit यथा
[२] K. L. ०मयि
[३] K. L. omit ०स्य बाह्यकरण
[४] A. ०दयाः
[५] A. omits वा०
[६] L. ०तो
[७] A. प्रवृत्तिः
[८] A. इत्यादि, K. L. त्यादिना
[९] K. L. नघुतया प्रकाशतया
[१०] K. L. प्रकृति०
[११] A. omits सर्वजगतः
[१२] A. omits विसर्ग
[१३] K. L. भंगाप्तदो
[१४] The metre changes in the third foot.
[१५] A. ०म्नो
[१६] K. L. नेत्रेश्रंतेन
[१७] K. L. ०भिदा
[१८] K. L. ०श्रीकुम्भकर्णविरचिते

## प्रवासानुभाववर्णनं नाम चतुर्थं परीक्षणम्

यस्मिन् प्रकृष्टो वासः स्यान्मुमुक्षूणां सनातने ।
[१]तमप्रवासदं वन्दे [२]भक्तवत्सलमीश्वरम् ॥१॥

कार्यतः संभ्रमाच्छापात् प्रवासो भिन्नदेशता ।
[३]द्वयोस्तत्राश्रुनिःश्वासः[४] कार्श्यं लम्बालकादिता ॥२॥

[कार्यतो यथा ]

तत्र कार्यतो बुद्धिपूर्वकत्वात् त्रिविधो भवेत् । भावी भवन् [५]भूतश्चेति ।

तत्र भावी [६]यथा—

याताः किं न मिलन्ति सुन्दरि पुनश्चिन्ता त्वया मत्कृते
नो कार्या नितरां कृशासि[७] कथयत्येवं [८]सवाष्पे मयि ।
लज्जामन्थरतारकेण[९] निपतत्पीताश्रुणा चक्षुषा
दृष्ट्वा मां हसितेन भाविमरणोत्साहस्तया सूचितः[१०] ॥३॥

[ Amaru. 10 ]

[११]भवन् यथा—

शैलैरन्तरिताः शनैश्च सरितामुर्वीभृतां काननै-
र्यत्नेनापि न याति लोचनपथं कान्तेति जानन्नपि ।
[१२]उद्ग्रीवश्चरणाग्र-[१३]रुद्धवसुधः कृत्वाऽश्रुपूर्णे दृशौ
तामाशां पथिक-[१४]स्तयाऽपि किमपि ध्यायन् मुहु-[१५]र्वीक्ष्यते ॥४॥

[१६]भूतो यथा—

हारोऽपि[१७] नार्पितः कण्ठे मया [१८]विरहभीरुणा ।
इदानीमन्तरे जाताः [१९]सरित्सागरपर्वताः ॥५॥

[ Hanuman. V 24 ]

[संभ्रमाद् यथा—]

द्वितीयः[२०] सहसोत्पन्नो दिव्यमानुषविप्लवात् ॥६॥

---

[१] K. L. तमः
[२] K. L. भक्तेभ्यो भक्तवत्सलम्
[३] K. द्वयोर्यत्रा०, L. द्वयोर्यशश्च०
[४] A. ०निश्वासः
[५] L. omits भृ०
[६] L. नाथा
[७] K. L. add स
[८] K. L. सवाप्ये
[९] L. ०तातरकेण
[१०] K. L. ०ताः
[११] A. भवद्, K. L. भवनं
[१२] K. L. उद्गीत
[१३] K. L. omit ०रुद्ध०
[१४] K. L. ०स्तवापि
[१५] L. ०वीक्ष्यते (omits रेफ)
[१६] K. L. भूतो
[१७] Original and K. L. हारो नारोपितः
[१८] Original विश्लेष०
[१९] Ibid पर्वताः सरितो द्रुमाः
[२०] L. ०यं सत्याहसो०

**यथा—**

[१]तिष्ठेत् कोपवशात् [२]प्रभावपिहिता दीर्घं न सा कुप्यति
स्वर्गायोत्पतिता भवेन्मयि पुनर्भावार्द्रमस्या [३]मनः ।
ता (तां) हर्तुं विबुधद्विषो[४]-ऽपि न च मे शक्ताः[५] पुरोवर्तिनीं
सा चात्यन्तमदर्शनं नयनयोर्यातेति[६] कोऽयं विधिः ॥७॥

[ Vikramo. IV 9 ]

**शापाद् यथा—**

शापान्तो[७] मे भुजगशयनादुत्थिते शार्ङ्गपाणौ
शेषान् मासान् गमय चतुरो लोचने मीलयित्वा ।
पश्चादावां विरहगुणितं तं तमात्माभिलाषं
[८]निर्वेक्ष्यावः परिणतशरच्चन्द्रिकासु [९]क्षपासु ॥८॥

[ Meghadūta. II 49 ]

**अथ करुणा—**

**द्वयोरन्यतरापायः[१०] संगमाशाविवर्जितः ।**
**करुणा सा द्विधा ज्ञेया मृते [११]तच्छङ्कयाऽपि च ॥९॥**

**तत्र [१२]मृते यथा—**

हृदये [१३]वससीति मत्प्रियं [१४]यदवोचस्तदवैमि कैतवम् ।
उपचारपदं न चेदिदं त्वमनङ्गः[१५] कथमक्षता रतिः ॥१०॥

[ Kumāra. 4. 9 ]

**[१६]मृतिशङ्कया यथा—**

त्रस्तैकहायनकुरङ्गविलोलदृष्टे-
स्तस्याः परिस्फुरितगर्भभरालसायाः ।
ज्योत्स्नामयीव मृदुबालमृणालकल्पा
क्रव्याद्भिरङ्गलतिका नियतं [१७]विलुप्ता ॥११॥

[ Uttara. III. 28 ]

**यथा [वा]—**

**[१८]अनिर्भिन्नो गभीरत्वादन्तर्गूढघनव्यथः ।**
**पुटपाकप्रतीकाशो रामस्य करुणो[१९] रसः ॥१२॥**

[ Uttara. III. 1 ]

[१] K. L. वि० [२] A. प्रभारतिहिता [३] A. पुनः, K. L. स्तु नः
[४] K. repeats ०षो० [५] K. L. omit विसर्ग
[६] A. ० र्यातीति [७] A ०पांते भुजग० [८] A. निर्वेमः
[९] A. K. L. क्षिपासु [१०] K. L. ०तरोपायः
[११] K. L. तत् शंकयापि वा [१२] A. मृयते, K. L. मृतो [१३] K. L. वसतीति
[१४] K. L. यदवोचत् स्तद् [१५] A. omits विसर्ग [१६] K. L. मृत०
[१७] A. K. L. वितप्ता [१८] A. K. L. अंतर्भिन्नो [१९] A. करणं



**[१]अथ च शोकमिश्रितो मानसस्तु कोपमिश्रित इति । एतयोरुभयोर्विभावानुभावप्रवेशः । संभोगोऽपि विरहानन्तरतया चतुर्विधः ॥**

**तत्र पूर्वानुरागानन्तरं(रो) यथा—**

राजेन्द्र-मौलिमणिरञ्जितपादपीठ-
मेकातपत्रमवनेर्न तथा प्रभुत्वम् ।
अस्याः सखे चरणयोरहमद्य [२]सम्यक् (ग्)
आज्ञा-करत्वमधिगम्य यथा कृतार्थः ॥१३॥

**मानानन्तरो यथा —**

एकस्मिञ्शयने पराङ्मुखतया वीतोत्तरं ताम्यतो-
रन्योन्यं हृदि संस्थितेऽप्यनुनये संरक्षतोर्गौरवम्[३] ।
दम्पत्योः शनकैरपाङ्गवलना-[४]न्मिश्रीभवच्चक्षुषो-
र्भग्नो मानकलिः सहासरभसव्यासक्तकण्ठग्रहः ॥१४॥

[ Amaru. 23 ]

**प्रवासानन्तरं (रो) यथा—**

रतिखेदसुप्तमपि मां शयने वा मन्यसे प्रवासगतम्[५] ।
अबले सा[६] त्वमसहथाः कथं मदीयं चिरवियोगम् ॥१५॥

**मृतसंभावनानन्तरात्मक-करुणानन्तरो यथा—**

[७]मृतेति प्रत्ययं गन्तुं यथा (गन्तुर्यथा?) मे [८]मरणं मतम् ।
**[९]सैवावन्ती मया [१०]दृष्टा कथमत्रैव [११]जन्मनि ॥१६॥**

**मरणानन्तरो यथा—**

तीर्थे[१२] तोयव्यतिकरभवे जह्नुकन्यासरय्वो[१३]-
र्देहत्यागा-[१४]दमरगणना-लेख्यमासाद्य सद्यः ।
पूर्वाकाराधिकतररुचा[१५] संगतः कान्तयाऽसौ
[१६]लीलागारेष्वरमत पुनर्नन्दनाभ्यन्तरेषु ॥१७॥

[ Raghu 8. 95 ]

**अत्रालिङ्गनादयोऽ-[१७]नुभावाः कामतन्त्रानुसारिणः[१८] स्वयमेव बोद्धव्याः ॥**

[१] K. L. omit अथ च······प्रवेशः । [२] K. L. सम्यगाज्ञा
[३] L. ०रावम् [४] K. L. ०मिश्रीभवंच्चक्षुषो भग्नो
[५] A. ०गता [६] K. L. सत्वे [७] A. मृतेऽपि K. L. मृते तु
[८] A. मारणं नवं [९] A. सैवा सती [१०] A. दष्टा
[११] A. जंभसि [१२] K. L. तीर्थ [१३] A. K. L. स (A. श०) रव्यो
[१४] K. gives ा पूर्वमात्रा before द० and deletes it. L. deciphers it as ०ई०
[१५] A. K. L. ०धिकचतुरया [१६] A. लीलारागे०, K. L. लीलांगारे
[१७] L. ०दनुभावाः [१८] K. L. ०सारेण

नानाविहार[१]-रमणी-रमणीय[२]-हाव-
भावप्रपञ्चरचना[३]-चतुरेण राज्ञा ।
सन्निर्मितः [४]स्वविलसद्विविधानुभावो-
ल्लासः सुहृत्सुहृदये[५] हृदयङ्गमोऽस्थम् ॥१८॥

*इति श्रीजगदीशवनदेवनिजगणेन जगदीश्वरीकामेश्वरीचरणकिङ्करेण श्रीब्रह्माद्रिविभुना अध्युष्टतमनरेश्वरेण भीष्मपुरजयानीतानेकराजकन्यारत्नेन श्रीपुरग्रहणसंवर्धितयशोभरेण वाटिकाचलग्रहणजनितकीर्तिपूरपराजिताचलनायकेन संगमनीरदुर्गोद्धरणोद्धृतसकलमण्डलाधीश्वरेण दमनपुरविध्वंसनबन्दीकृतयवनीनिचयेन (from this epithet onwards L. follows A.) महिषमेरुजयाजेयविभवेन शाकम्भरीरमणपरिशीलनपरिप्राप्तशाकम्भरीपरि-

---

[१] K. L. ०भिराम० (L. omits रम० of ०रमणी०)

[२] A. omits ०रमणीय०

[३] K. L. ०नां० (add अनुस्वार)

[४] A. स्वदलसद्०, K. L. ०र्मिते हादलसद्

[५] K. L. सहृदये

* K. reads the colophon as follows. L. agrees with K. upto अजय० in the sixth epithet below (अजय is deleted with a horizontal line : the ink of this line is identical with that of the changed handwriting). The next folio beginning with दमनपुर० etc. is written in a changed handwriting and from that point the text of L. agrees with that of A. (L. begins with श्री) इति श्रीसरस्वतीरससमुद्भूतकैरवोद्याननायकेन अभिनवभरताचार्येण मालवाम्भोधिमाथमन्थमहीधरेण योगिनीप्रसादामादितयोगिनीपुरेण मण्डल-(L. संगमनीर) दुर्गोद्धरणोद्धृत-सकलमण्डलाधीश्वरेण अजय (L. agrees with K. only upto this point)-मेरुजयाजेयविभवेन यवनकुलाकालकालरात्रिरूपेण शाकम्भरीरमणपरिशीलनपरिप्राप्तशाकम्भरीप्रमुखशक्तित्रयेण नागपुरोद्धूलनधर्षितनागपुरेण अर्बुदाचलग्रहणसंदर्शिताचलाद्भुतप्रतापेण गूर्जराधीशधीरत्वोन्मूलनप्रचण्डपवनेन श्रीमत्कुम्भलमेरुनवीननिर्मितसुमेरुणा श्रीचित्रकूटभौमस्वर्गीकृता-(०स्वर्गता०) यथार्थीकरणरचितचारुतरपथेन मेदपाटसमुद्रसंभवरोहिणीरमणेन अरिराजमत्तमातङ्गपञ्चाननेन प्ररूढपत्रयवनदहनदवानलेन प्रत्यर्थिपृथिवीपतितिमिर-ततिनिराकरणप्रौढप्रतापमार्तण्डेन वैरिवनितावैधव्यदीक्षादानदक्षोद्दण्डकोदण्डदण्डमण्डिताखण्डभुजादण्डेन भूमण्डलाखण्डलेन श्रीचित्रकूटविभुना अध्युष्टतमनरेश्वरेण गजनरतुरगाधीशराजत्रितयतोडरमल्लेन वेदमार्गस्थापनचतुराननेन याचककल्पनाकल्पद्रुमेण वसुन्धरोद्धरणादिवराहेण परमभागवतेन जगदीश्वरीचरणकिङ्करेण भवानीपतिप्रसादाप्तापसादवरप्रसादेन राजाधिराजश्रीमहाराजमहाराणाश्रीमोकलनन्दनेन राजाधिराजश्रीकुम्भकर्णेन विरचिते संगीतराजे षोडशसाहस्र्यां संगीतमीमांसायां रसरत्नकोशे अनुभावोल्लासे प्रवासाद्यनुभाववर्णनं चतुर्थं परीक्षणम् । उल्लासश्च समाप्तः ॥



तोषितशाकम्भरी-प्रमुखशक्तित्रयेण अष्टादशगिरिविजयविख्यातवीर्यगर्वेण महदम्बमातृकापुरोद्धूलनधर्षित (A. ०ता०) महोरगपुरेण श्रीवनदेवस्वामिप्रा (L. ०प्र०) सादरचनापरपरमेश्वरेण श्री (L. omits श्री०) त्र्यम्बकेश्वरसन्निधिनिर्मितकीर्तिस्तम्भोन्नतजयस्तम्भेन श्रीब्रह्मगिरिभौमस्वर्गतायथार्थीकरणरचितचारुपथेन श्री (A. omits श्री०) कामाक्षागिरिनवीननिर्मितिपराजितसुमेरुणा श्रीमहिषाचलोपरिश्रीहरिशरणरचिताचलदुर्गेण (A. and L. leave blank space for one epithet ; the preceding epithet is numbered as 18 in A. and as 17 in L. The blank space is numbered as 19 in A. : L. does not give a number but closes the space with two vertical lines and counts it as one unit while numbering the next epithet as 19.) वीणावादनप्रवीणेन यवनकुलाकालकालरात्रिरूपेण त्रिसन्ध्यक्षेत्रसमुद्रसंभवरोहिणीरमणेन परमभागवतेन महाराजाधिराजमहाराणां (णा) श्रीमृगाङ्कृतामराजेन्द्रनन्दनेन महाराज्ञीश्रीसौभाग्यवती-जसमाम्बिकाहृदयनन्दनेन सकलसीमन्तिनीशिरोमणिनिकुम्भराजन्यवंशावतंसमहाराज्ञीश्रीकर्मवतीलखुमादेवीहृदयाधिनाथेन महाराजाधिराजश्रीकालसेनमहीमहेन्द्रेण विरचिते संगीतराजे षोडशसाहस्र्यां संगीतमीमांसायां रसरत्नकोशे अनुभावोल्लासे प्रवासानुभाववर्णनं नाम चतुर्थं परीक्षणं समाप्तम् । उल्लासश्च तृतीयः समाप्तः (L. omits समाप्तः) ॥ (A. adds श्रीरस्तु) ॥

14.x.66

# चतुर्थः संचारिभावोल्लासः

## निर्वेदादिनिरूपणं नाम प्रथमं परीक्षणम्

[१]निर्वेदादेरनुभावो यतस्तस्मादकारणम् ।
सदा चानुभवं दद्यादेकलिङ्गामिवः प्रभुः ॥१॥

अथ व्यभिचारिणो निरूप्यन्ते

निर्वेदोऽथ तथा ग्लानिः[२] शङ्काऽसूयामदश्रमाः ।
आलस्यं चैव दैन्यं च चिन्ता मोहः स्मृतिर्धृतिः ॥२॥

व्रीडा चपलता हर्ष आवेगो जडता तथा ।
गर्वो [३]विषाद औत्सुक्यं निद्राऽपस्मार एव च ॥३॥

सुप्तं विबोधोऽमर्षश्च [४]अवहित्यमथोग्रता ।
[५]मतिर्व्याधिस्तथोन्मादस्तथा मरणमेव च ॥४॥

त्रासश्चैव वितर्कश्च विज्ञेया व्यभिचारिणः ।
त्रयस्त्रिंशदिमे भावाः[६] प्रयान्ति [७]रससंस्थितिम् ॥५॥

[१] निर्वेदो यथा—

परमार्थपरिज्ञानं निर्वेदः परिकीर्तितः ।
[८]तत्त्वज्ञानापदी-[९]र्ष्यादेर्निर्वेदो निष्फलत्वधीः ॥
तत्त्वं विना तु निर्वेदः[१०] श्वासवैवर्ण्यदीनता ॥६॥

[११]तत्त्वज्ञानाद् यथा—

प्राप्ताः श्रियः सकलकामदुघास्ततः किं
दत्तं पदं शिरसि [१२]विद्विषतां ततः किम् ।
[१३]सम्पादिताः प्रणयिनो विभवैस्ततः किं
[१४]कल्पं स्थितं तनुभृतां तनुभिस्ततः किम् ॥७॥ [ Vairāgya. 67 ]

---

[१] A. and L. (in its changed handwriting) omit this verse.
[२] A. L. omit विसर्ग [३] K. विकार
[४] A. L. व्यवहित्थ० [५] A. L. मति-व्याधि०
[६] A. L. omit विसर्ग [७] K. L. च रसस्थितिम्
[८] The changed handwriting in L. ends with तत्त्वज्ञानाप० and the normal handwriting reappears in the next folio no.54 (633). [९] K. L. ०र्णा [१०] K. L. ०दश्चास्य० [११] K. L. तच्च०
[१२] A. omits वि०, K. L. omit शिरसि and read तद्विमतां
[१३] A. omits the third and fourth foot, K. L. सम्मानिनो
[१४] Original कल्पं स्थितास्तनुभृतां तनवस्ततः किम्



आपदो यथा—

अपसारय घनसारं कुरु हारं दूर एव किं कमलैः ।
अलमलमालि मृणालैरिति वदति दिवानिशं बाला ॥८॥
[ Kuṭṭanī. 102 ]

ईर्ष्यातो यथा—

[१]धिक्कारो ह्ययमेव मे [२]यदरयस्तत्राप्यसौ तापसः
सोऽप्यत्रैव निहन्ति राक्षसभटान्[३] जीवत्यहो रावणः ।
धिक्(ग्)धिक् शक्रजितं प्रबोधितवता किं [४]कुम्भकर्णेन वा
स्वर्गग्रामटिकाविलुण्ठनवृथोच्छूनैः[५] किमेभिर्भुजैः ॥९॥
[ Hanuman. XIV. 6 ]

अयं च सर्वसाधारणोऽपि[६] विरहरौद्रादौ प्रायिकः ॥

[२] अथ ग्लानिः—

[७]बलस्यापचयो ग्लानिराधिव्याधिप्रकर्षजा ।
वैवर्ण्यकम्पानुत्साह-क्षयाङ्गावनतादिकृत्[८] ॥१०॥

*यथा—

[९]किसलयमिव मुग्धं [१०]बन्धनाद् विप्रलूनं
हृदयकुसुमशोषी[११] दारुणो दीर्घशोकः ।
[१२]ग्लपयति परिपाण्डुः[१३] क्षाममस्याः[१४] शरीरं
शरदिज इव घर्मः केतकी-[१५]गर्भपत्रम् ॥११॥
[ Uttara. III. 5 ]

[३] शङ्का यथा

अनिष्टाभ्यागमा(मो)त्प्रेक्षां शङ्कामाचक्षते बुधाः ।
कम्पशोका(षा)भिवीक्षादिरस्त्रवर्णस्वरान्यता ॥१२॥

---

[१] Quotation in K. P. and Daśa. न्यक्कारो; quotation in Daśa. transposes the first two and the last two feet.
[२] A. वद० [३] Quotation in K. P. राक्षसकुलम्
[४] A. कालसेनेन; this is a striking instance of the engineered drive for changing कुम्भकर्ण to कालसेन in A.
[५] Quotation in Daśa. ०विलुण्ठनपरैः पीनैः
[६] K. L. add हि
[७] K. L. बलस्योप०
[८] A. ०क्षयांगाचेतनादिकान्, L. ०क्षयांगावनता *omits यथा
[९] K. L. किश० [१०] K. बंनाद् (omits ०ध०)
[११] A. ०शोका [१२] K. L. ग्लाप०
[१३] K. L. omit विसर्ग [१४] L. omits विसर्ग
[१५] K. L. ०घर्म०

यथा—

ह्रिया सर्वस्यासौ[१] [२]हरति विदितास्मीति वदनं
द्वयोर्दृष्ट्वाऽऽलाप[३] कलयति कथामात्मविषयाम् ।
सखीषु[४] स्मेरासु प्रकटयति वैलक्ष्यमधिकं
प्रिया प्रायेणास्ते हृदयनिहितातङ्कविधुरा[५] ॥१३॥

[ Ratnā. III. 4 ]

[४] अथासूया —

असूया सा निजौद्धत्याद् गुणानामसहिष्णुता ॥१४॥

यथा –

कन्या काचिदिहापि कर्मणि [६]पण[ः] स्यादित्यसूयाबलात्
सीताऽ-[७]पाङ्गमयूखमांसलमुखज्योत्स्नाविलिप्तां दिवम् ।
कुर्वाणेन रघूद्वहेन चक्रपे नारायणीयं धनुः
[८]संधायाथ शरश्च भार्गवगतिच्छेदादमोघीकृतः[९] ॥१५॥

[५] अथ मदः—

संमोहनान्तसंभेदो मदिरादिकृतो मदः ॥१६॥

यथा—

कुर्वता मुकुलिताक्षियुगाना[१०]-मङ्गसादमवसादितवाचाम् ।
ईर्ष्ययेव[११] हरता ह्रियमासां तद्गुणः[१२] स्वयमकारि मदेन ॥१७॥

[ Śiśupāla. 10. 30 ]

[६] अथ श्रमः —

श्रमः[१३] [१४]"खेदोऽध्वरत्यादेः स्वेदोऽस्मिन् मर्दनादयः[१५]" ॥१८॥

तत्र रतेर्यथा –

प्राप्य मन्मथरसादति[१६]-भूमिं दुर्वहस्तनभराः[१७] सुरतस्य ।
शश्रमुः श्रमजलार्द्रललाटश्लिष्टकेशमसितायतकेश्यः[१८] ॥१९॥

[ Śiśupāla. 10. 80 ]

[७] अथालस्यम्—

पराधीन[१९]-प्रवृत्तिः स्यादालस्यं कृत्यवस्तुषु ॥२०॥

[१] A. L. ०सां
[२] K. L. हरित, original नयति
[३] A. L. omit अनुस्वार
[४] K. L. ०मु
[५] K. L. ०रम्
[६] A. omits पण स्या०
[७] K. L. पोरानयूप०
[८] A. omits ०धायाथ शरश्च भा०
[९] L. ०कृः
[१०] A. ०युना······मवसीदित०, K. L. ०मंगसादथ०
[११] A. एव
[१२,१३] K. L. omit विसर्ग
[१४] A. looks like स्वेदा०
[१५] A. ०यया
[१६] A. ०दिति०, K. L. ०दत०
[१७] A. omits विसर्ग
[१८] K. L. ०केश्याः
[१९] A. ०धीनः



यथा—

सुरेन्द्रमात्राऽऽश्रितगर्भगौरवात् प्रयत्नमुक्तासनया गृहागतः ।
तयोपचाराञ्जलिखिन्नहस्तया ननन्द [१]पारिप्लवनेत्रया नृपः ।२१।

[ Raghu. 3. 11 ]

[८] [२]अथ दैन्यम्—

सत्त्वत्यागादनौजस्यं दैन्यं कोपरुगादिकृत् ॥२२॥

यथा —

अस्मान् साधु विचिन्त्य संयमधना-[३]नुच्चैः कुलं चात्मन-
स्त्वय्यस्याः कथमप्य-[४]बान्धवकृतां स्नेहानुवृत्तिं[५] च ताम् ।
सामान्यप्रतिपत्तिपूर्वकमियं दारेषु दृश्या त्वया
[६]भाग्याधीनमतःपरं न खलु तद् वाच्यं वधूबन्धुभिः ॥२३॥

[ Śākuntalam. VI. 19 ]

[९] चिन्ता यथा --

प्रयत्नपूर्विकाऽर्थेषु स्मृतिश्चिन्तेति कथ्यते ॥२४॥

यथा—

घर्मांशोर्विसर-[७]विवर्तनैरिदानीं
मुग्धाक्ष्याः परिजनवारसुन्दरीणाम् ।
तत् प्रातर्विहितविचित्रचित्रलेखा[८]-
वैदग्ध्यं जहति हि कुङ्कुमानि चित्रम् ॥२५॥

[१०] मोहो[९] यथा –

मोहस्तु मूर्छनं भीतिर्दुःख[ा]वेगानुचिन्तितैः ।
तत्राज्ञानभ्रमाध्यान-घूर्णनादर्शनादयः ॥२६॥

यथा—

तीव्राभिषङ्गप्रभवेण वृत्तिं मोहेन संस्तम्भ-[१०]यतेन्द्रियाणाम् ।
अज्ञातभर्तृव्यसना मुहूर्तं [११]कृतोपकारेव रतिर्बभूव ॥२७॥

[ Kumāra. 3. 73 ]

[११] स्मृतिर्यथा

स्मृतिः[१२] पूर्वानुभूतार्थविषयं ज्ञानमुच्यते ॥२८॥

[१] L. पारिप्लवे०
[२] K. L. दैन्यं यथा
[३] A. K. L. ०न्युच्चैः
[४] L. ०बन्ध०
[५] L. ०कृत्ति
[६] A. भोग्या०
[७] A. ०विवेर्तनै०
[८] K. adds अनुस्वार
[९] K. भोमो, L. मोमा
[१०] K. L. ०यितें० (L. adds ०नें०)
[११] K. L. कुतो० (L. ०कुतोयथाकारेव)
[१२] A. omits विसर्गं

यथा --

अदृश्यन्त पुरस्तेन खेलाः[1] खञ्जनपङ्क्तयः ।
अस्मर्यन्त[2] विनिःश्वस्य प्रियानयनविभ्रमाः ॥२९॥

[ Quoted in Kāvyanu. 6. p. 340 ]

[१२] धृतिर्यथा—

अभीष्टार्थस्य संप्राप्तौ दृष्टार्थाधिगमो धृतिः ॥३०॥

यथा—

वयमिह परितुष्टा वल्कलैस्त्वं [3]दुकूलैः[4]
सम इह परितोषो[5] निर्विशेषो विशेषः ।
स तु भवतु[6] दरिद्रो यस्य तृष्णा विशाला
मनसि च परितुष्टे कोऽर्थवान् को दरिद्रः ॥३१॥

[ Vairāgya. 53 ]

यथा वा—

[7]पादास्त एव शशिनः सुखयन्ति गात्रं
बाणास्त एव मदनस्य मनोऽनुकूलाः[8] ।
संरम्भवज्रमिव सुन्दरि यद्यदासीत्
त्वत्संगमेन[9] मम तत्तदिवापनीतम् ॥३२॥

[ Subhāṣita. 313. 54 ]

[१३] व्रीडा यथा—

चेतसो मीलनं व्रीडा स्तुत्यकार्य-[10]क्रियादिभिः ॥३३॥

[स्तुत्या] यथा--

तस्य संस्तूयमानस्य चरितार्थै-[11]र्महर्षिभिः ।
शुशुभे विक्रमोदग्रं व्रीडयाऽवनतं शिरः ॥३४॥

[ Raghu. 15. 27 ]

अकार्यक्रियया यथा —

मुनिशापेन भगवान-[12]हल्यारतिलम्पटः ।
बिडौजा निबिडव्रीडो भेजे विशलतान्तरम् ॥३५॥

---

[1] A. खेल०, K. L. खेलस्०
[2] K. L. ०र्यंता    [3] L. दुरकू०
[4] K. L. omit विसर्ग    [5] A. K. L. ०शेषो    [6] A. ०ति
[7] K. L. omit वा here and read वादास्त in the place of पादास्त
[8] A. दुकूलाः, original ममानुकूलाः
[9] K. ०स, L. ०समतत्त०    [10] A. ०कार्या०
[11] Original ०स्तपस्विभिः
[12] K. L. ०हन्या०



[१४] [1]चपलता यथा –

मात्सर्यद्वेषरागादे[2]-श्चापलं[3] त्वनवस्थितिः ।
आत्मप्रकाशनपरा चेष्टेति बभणुः परे ॥
तत्रोच्छ्वास[श्च]पारुष्य-स्वच्छन्दोच्चाटनादयः ॥३६॥

यथा—

कश्चित् कराभ्यामुपगूढनालमालोलपत्राभिहतद्विरेफम् ।
[4]रजोभिरन्तःपरिवेषबन्धि लीलारविन्दं भ्रमयाञ्चकार ॥३७॥

[ Raghu. 6. 13 ]

[१५] हर्षो यथा –

मनःप्रसादो हर्षः[5] स्याद-[6]दिष्टावाप्त्युत्सवादिभिः ॥३८॥

यथा--

युगान्तकालप्रतिसंहृतात्मनो जगन्ति यस्यां सविकाशमासत[7] ।
तनौ ममुस्तत्र[8] न कैटभद्विषस्तपोधनाभ्यागमसंभवा मुदः ॥३९॥

[ Śiśupāla. 1. 23 ]

[१६] आवेगो यथा--

……………… आवेगः[9] संभ्रमस्त्वरा ।
शत्रुतो [10]वाततो वाग्नेरुत्पातेष्टागमादिषु[11] ॥
आवेगः[12] संभ्रमस्तत्र प्रलापभ्रमणादयः ॥४०॥

यथा—

मातर्मातर्जनक [13]जनक ज्यायसि ज्यायसीति
भ्रातर्भ्रातर्भगिनि भगिनि प्रेयसि प्रेयसीति ।
यस्मिन्नासीत् प्रचुरतुरगव्यहवित्रस्तवैरि-
[14]स्त्रीपुंसां यः प्रति-रुतिदलद्-दिक्कलापो विलापः ॥४१॥

[१७] जडता यथा—

अप्रतिपत्तिर्जडता स्यादिष्टानिष्टदर्शनस्मृतिभिः ।
अनिमेषनयनवीक्षणतूष्णींभावादयस्तत्र ॥४२॥

---

[1] A. omits चपलता यथा    [2] L. ०दि०
[3] A. L. omit अनुस्वार    [4] L. राजा०
[5] A. L. omit विसर्ग    [6] A. ०दिष्टावाप्तिभवादिभिः
[7] K. L. add विसर्ग    [8] K. ०स्तवनं, L. स्तवननं
[9] K. L. omit विसर्ग    [10] K. L. वायुतो
[11] K. L. ०यादिषु
[12] K. L. omit विसर्ग    [13] L. omits जनक
[14] A. स्त्रीपुंसानां प्रतिश्रुतिदलदिक्पालो विपालः, K. L. स्त्रीपुंसानां प्रतिरविदल-दिक्पालो विलापः ।

यथा —

शिथिल-शिथिलं [१]न्यस्य स्वैरं धनुः[२] [३]शिशिरैः[४] शिरो-
नयनसलिलैः कुर्वंस्तज्ज्यालतामपरामिव ।
अहह विकलं श्रुत्वा[५] कर्णे घनस्तनितध्वनिं
किमपि मनसि[६] ध्यायन् ध्यायन्न याति न तिष्ठति ॥४३॥

[१८] अथ[७] गर्वः—

**गर्वोऽन्येषामवज्ञानमात्मसंभावनादिभिः ।**
**कर्मास्य धर्षणावज्ञा [८]सविलासाङ्गवीक्षणम् ॥४४॥**

यथा

धृतायुधो[९] यावदहं तावदन्यैः किमायुधैः ।
यद्वा न सिद्धमस्त्रेण मम तत्केन साध्यते ॥४५॥

[ Veṇī. III. 46 ]

यथा वा –

मयि तिष्ठति लोकेऽस्मिन् किमनङ्गस्य कीर्तनैः ।
विभूतौ मयि दृष्टायां धनदोऽसावकिंचनः ॥४६॥

[१९] [१०]विषादो यथा—

**विषादश्चेतसो भङ्ग उपायापायचिन्तनैः[११] ॥४७॥**

यथा—

[१२]व्यर्थं यत्र कपीन्द्रसख्यमपि मे क्लेशः कपीनां [१३]वृथा
प्रज्ञा [१४]जाम्बवतो न यत्र न गतिः पुत्रस्य वायोरपि ।
मार्गं यत्र न [१५]विश्वकर्मतनयः कर्तुं नलोऽपि क्षमः
[१६]सौमित्रेरपि पत्रिणामविषयस्तत्र प्रिया क्वापि मे ॥४८॥

[Uttara. III. 45]

[२०] औत्सुक्यं यथा—

**कार्य[ा] क्षमत्व-[१७]मौत्सुक्य-[१८]मुत्कण्ठेत्यपरे विदुः ।** ×
**[१९]तत्रोच्छ्वासत्वरावेगहृत्तापस्वेदविभ्रमाः ॥४९॥**

[१] A. omits न्यस्य
[२] A. omits ०नुः
[३] A. न्वरोशरोनयन०
[४] K. L. ०रो
[५] K. L. (repeat) श्रुत्वा
[६] A. omits मनसि ध्यायन्
[७] A. अर्थो
[८] A. शिथिलासाँग
[९] K. L. ०युध्ये
[१०] K. L. विपदो
[११] L. omits विसर्ग
[१२] K. L. व्यक्तं
[१३] A. यथा
[१४] K. L. जाम्बु०
[१५] L. विश्वस्यं कर्म०
[१६] L. सो०
[१७] A. ०मैं०
[१८] K. L. ०मुक्तं वेत्यपरे विदुः
[१९] L- तर्श०



यथा—

आत्मानमालोक्य च शोभमान-[१]मादर्शबिम्बे स्तिमितायताक्षी ।
[२]हरोपयाने त्वरिता बभूव स्त्रीणां प्रियालोकफलो हि वेषः ॥५०॥

[ Kumāra. 7. 22 ]

[२१] निद्रा यथा—

**मनःसंमीलनं निद्रा चिन्ताऽऽलस्यश्रमादिभिः ।**
**तत्र [३]जृम्भाङ्गभङ्गाक्षि- मीलनोच्छ्वा(ब)सनादयः ॥५१॥**

यथा—

मामाकाशप्रणिहतभुजं निर्दयाश्लेषहेतो-
र्लब्धायास्ते कथमपि मया स्वप्नसंदर्शनेषु ।
पश्यन्तीनां न खलु बहुशो न स्थलीदेवतानां
मुक्तास्थूलास्तरु-[५]किसलयेष्वश्रुलेशाः[६] पतन्ति ॥५२॥

[ Megha. II 45 ]

[२२] अपस्मारो यथा—

**आवेगग्रहदुःखाद्यैरपस्मारः प्रजायते ।**
**भूपातकम्पप्रस्वेदलालाविकृत-[७]वीक्षणैः ॥५३॥**

यथा—

निपत्य धरणीपृष्ठे लालायितमुखाखिलः ।
विकृतं वीक्षते [८]स्वेद-दुःखमग्नो व्यथाकुलः ॥५४॥

[२३] सुप्तं यथा—

**सुप्तं[९] निद्रासमुद्रेकः श्वासोच्छ्वासक्रियाऽत्र तु ॥५५॥**

यथा—

लघुनि तृणकुटीरे[१०] क्षेत्रकोणे[११] यवानां
[१२]नवकलमपलालस्त्रस्तरे[१३] सोपधाने ।
परिहरति सुषुप्तं हालिकद्वन्द्वमारात्-
कुचकलशमहोष्मावद्धरेखस्तुषारः ॥५६॥

[ Quoted in Daśa IV 22, ascribed to कमलायुध० ]

[१] K. L. ०आदर्श०
[२] K. L. हारान०
[३] L. कृम्भां०
[४] A. K. L. मीलनाश्वासना०
[५] K. L. किश० (L. ०लायेष्ठ)
[६] K. L. omit विसर्ग
[७] A. ०वे०
[८] A. स्वेदः, K. L. ०स्विद्य०
[९] L. omits अनुस्वार
[१०] K. L. ०रो
[११] L. ०णो
[१२] K. L. नवल्कल० (L. adds ०यं०)
[१३] A. K. L. ०प्रस्तरे

[२४] [१]विबोधो यथा—

विबोधश्चेतनाप्राप्तिस्तत्र जृम्भाक्षिमर्दने ॥५७॥

यथा—

प्रत्यग्रोन्मेषजिह्मा क्षणमनभिमुखी रत्नदीपप्रभाणा-
मात्मव्यापारगुर्वी[२] [३]जनितजललवा जृम्भितैः [४]साङ्गभङ्गैः ।
नागाङ्कां भोक्तुमिच्छो[ः] शयनमुरुफणा[५]-चक्रवालोपधानं
निद्राच्छेदाभिताम्रा चिरमवतु हरेर्दृष्टि-[६]राकेकरा वः ॥५८॥

[ Mudrā. III. 21]

[२५] अमर्षो यथा—

[७]क्रोधः कृतापराधेषु स्थितोऽमर्ष इतीर्यते ॥५९॥

यथा—

लाक्षागृहानलविषान्नसभाप्रवेशैः[८]
प्राणेषु वित्तनिचयेषु पुनः प्रहृत्य[९] ।
आकृष्टपाण्डववधूपरिधानकेशाः
स्वस्था भवन्तु मयि जीवति धार्तराष्ट्राः ॥६०॥

[ Veṇī. I. 8 ]

[२६] अथावहित्यम् —

अवहित्थं तु लज्जादेर्हासाद्याकारगोपनम् ॥६१॥

यथा—

[१०]एवंवादिनि देवर्षौ पार्श्वे[११] पितुरधोमुखी ।
लीलाकमलपत्राणि गणयामास पार्वती ॥६२॥

[ Kumāra. 6. 85 ]

[२७] उग्रता यथा—

दृष्टेऽपराधे [१२]दौर्मुख्यं दोषैश्चण्डत्वमुग्रता ।
तत्र स्वेद-[१३]शिरःकम्पतर्जनाताडनादयः ॥६३॥

यथा—

यो यः शस्त्रं बिभर्ति स्वभुजगुरुमदः पाण्डवीनां[१४] चमूनां[१५]
यो[१६] यः [१७]पाञ्चालगोत्रे[१८] शिशुरधिकवया गर्भशय्यां गतो वा ।
यो यस्तत्कर्मसाक्षी चरति मयि रणे यश्च यश्च प्रतीपः
[१९]क्रोधान्धस्तस्य तस्य स्वयमपि जगतामन्तकस्यान्तकोऽहम् ॥६४॥

[ Veṇī. III. 32 ]

[१] K. L. वि (L. वि०)बोधे
[२] L. omits रेफ
[३] A. जलनि जललवा, L. जनितजलवा
[४] L. साम्भ०
[५] L. ०फलणा०
[६] K. L. ०राकै
[७] A. क्रोधस्थियोप०
[८] L. ०प्रवोशेः
[९] A. ०त्या, K. L. ०त्वा
[१०] A. इति
[११] A. पार्श्वौ
[१२] K. L. दो०
[१३] K. L. ०गिरः०
[१४] K. L. ०वानां
[१५] L. omits ०नां
[१६] A. यौ
[१७] K. L. पं०
[१८] A. ०गात्रे
[१९] K. L. क्रोधोष०



[२८] मतिर्यथा —

नीतिमार्गानुसन्धानादर्थनिर्धारणं मतिः ॥६५॥

यथा—

असंशयं[१] क्षत्रपरिग्रहक्षमा [२]यदार्द्रमस्यामभिलाषि मे मनः ।
सतां हि [३]सन्देहपदेषु वस्तुषु प्रमाणमन्तःकरणप्रवृत्तयः ॥६६॥

[ Śākuntalam I 23 ]

[२९] व्याधिर्यथा—

विरहादेर्मनस्तापाद् ज्वरादि-व्याधिरिष्यते ॥६७॥

यथा—

तस्य प्रसह्य हृदयं किल शोकशङ्कुः
प्लक्ष-[४]प्ररोह इव सौधतलं बिभेद[५] ।
प्राणान्तहेतुमपि तं[६] भिषजामसाध्यं[७]
लाभं प्रियानुगमने त्वरया [८]नु मेने ॥६८॥

[ Raghu. 8. 93 ]

[३०] उन्मादो यथा —

उत्कण्ठाहर्षशोकादेरुन्मादश्चित्तविभ्रमः ।
[९]अस्मिन्नस्थाने रुदितगीत-हासप्रलापिताः ॥६९॥

यथा—

क्वाकार्यं [१०]शशलक्ष्मणः क्व च कुलं भूयोऽपि दृश्येत[११] सा
दोषाणां प्रशमाय मे श्रुतमहो [१२]कोपेऽपि कान्तं मुखम् ।
किं वक्ष्यन्त्यपकल्मषाः कृतधियः स्वप्नेऽपि सा दुर्लभा
चेतः स्वास्थ्यमुपैहि कः खलु युवा धन्योऽधरं धास्यति ॥७०॥

[ Ascribed to Vikramo. IV 34 ]

[३१] मरणं यथा—

मरणं सुप्रसिद्धत्वाद् रसविद्भिर्न कीर्त्यते ॥७१॥

[३२] [१३]त्रासो यथा —

[१४]त्रासश्चित्तचमत्कार आकस्मिकभयादिभिः ॥७२॥

यथा—

समुत्क्षिपन् यः पृथिवीभृतां वरं वरप्रदानस्य चकार शूलिनः ।
त्रसत्तुषाराद्रिसुता-[१५]ससंभ्रम-स्वयंग्रहाश्लेषसुखेन [१६]निष्क्रयम् ॥७३॥

[ Śiśupāla. I 50 ]

[१] L. omits ०शयं
[२] original यदार्यं
[३] L. सांदे०
[४] L. प्रयोह०
[५] L. ०दे
[६] L. omits अनुस्वार
[७] A. omits ०साध्यं
[८] Original स
[९] A. omits ०स्मिन्नस्थाने रु०
[१०] K. L. शशि०
[११] L. ०श्योत
[१२] L. कोपपि
[१३] K. L. शशो
[१४] L. शस०
[१५] A. ससंभ्रमं, K. L. सुसंभ्रमः
[१६] A. निक्रियं, K. L. निःक्रमं

यथा वा[१]—

कल्याणदायि भवतोऽस्तु पिनाकपाणि-
[२]पाणिग्रहे भुजगकङ्कणभीषितायाः ।
संभ्रान्तदृष्टि [३]संहसैव नमः शिवाये[४]-
त्यर्धोक्तिलज्जिनयनं मुखमम्बिकायाः ॥७४॥

[३३] वितर्को यथा —

तर्को [५]विचारसंदेहाद् भ्रूलताङ्गुलिनर्तकः ॥७५॥

यथा—

नादस्तावद् विकलकुररी-कूजितस्निग्धतार-
[६]श्चिन्तोत्कर्षात् परिचित इव श्रोत्रसंवादमेति ।
अन्तर्भिन्नं भ्रमति हृदयं विह्वलत्येतदङ्गं
गात्रस्तम्भ[:] स्थगयति[७] गतिं[८] किं[९] प्रसारी किमेतत् ॥७६॥

अन्ये चेतोविकारा:[१०] [११]स्युरेष्वेवान्तर्गता अमी ।
स्थायिन्युन्मग्ननिर्मग्नाः कल्लोला इव सागरे ॥७७॥

निर्वेदो राज्यभोगे[१२] स्मृतिरपि विभवे पूर्वभुक्तेष्व[१३]-दैन्यं
चित्ते चिन्तौग्र्यजाड्यं रणमरणभिया व्रीडया नैव धैर्यम् ।
बुद्धिस्त्रासे वितर्कादिति नृपतिरयं[१४] संयुगे प्राप्त [१५]एवे-
त्येवं भावा रिपूणां विजयिनि[१६] नृपतावभ्यमित्रीयतः [१७]स्युः ॥७८॥

इति श्रीराजाधिराज-[१८]कालसेनमहीमहेन्द्रेण विरचिते संगीतराजे षोडशसाहस्र्यां संगीतमीमांसायां रसरत्नकोशे[१९] [२०]संचारिसंज्ञकोल्लासे [२१]निर्वेदादिनिरूपणं नाम प्रथमं परीक्षणं समाप्तम्[२२] ॥

———

[१] K. L. omit वा
[२] A. omits पाणि० (०ग्रहा)
[३] A. मवसैव मनः, L. सनृसैव
[४] A. ०या तद्वक्तिर्लज्जि०
[५] K. L. विचार:
[६] K. L. चिन्ता कापि
[७] K. L. ०ति (omit गति)
[८] A. गतिः
[९] K. L. कः प्रकारः
[१०] A. omits विसर्ग
[११] L. स्फ०, A. स्युर्भेदे०
[१२] K. ०भागः, L. ०भागाः
[१३] K. L. ०भुक्तेव०
[१४] K. L. ०रियं
[१५] K. एवत्येवं, L. रावत्येवं
[१६] K. L. विजयति
[१७] A. तिस्थुः० K. L. तिस्युः
[१८] K. L. श्रीकुम्भकर्ण (omit ०राजाधिराज०)
[१९] L. कोशो
[२०] K. L. व्यभिचारि०
[२१] K. L. निर्वेदादिरस०
[२२] K. L. omit समाप्तम्

## भावावस्थानसूचकं नाम द्वितीयं परीक्षणम्

किं [१]शास्त्रैः किमु चाध्वरैः किमु गुणैः किं तैश्च तैर्देवतैः[२]
किं वा कर्मभि-[३]रैहिकव्यतिकरव्यस्तैः समस्तैरपि ।
निर्विद्यात्र वयं विचार्य रुचिरं [४]सर्वापदुन्मूलनं[५]
[६]कामाक्षाचरणारविन्दमनिशं वन्दामहे निर्मलम् ॥१॥

एवमेकोनपञ्चाशद् भावाः सम्यक्[७](ङ्) निरूपिताः ।
ये [८]यस्मिन् स्यू रसे तेषामिति सम्यग् [९]विविच्यते ॥२॥

ग्लानिः शङ्का तथाऽसूया श्रमश्चपलताऽपि च ।
सुप्तं [१०]निद्राऽवहित्थं च शृङ्गारे[११] वेपथुस्तथा ॥३॥

आलस्यो(स्यौ)ग्र्य[१२]-जुगुप्साभिरेभिस्तु[१३] परिवर्जिताः ।
भावैरन्यैः[१४] स्वधा भावाः शृङ्गारं भावयन्ति च ॥४॥

हास्ये ग्लानिस्तथा शङ्काऽसूया चपलता श्रमः ।
सुप्तं निद्राऽवहित्थं च भावा अष्टौ व्यवस्थिताः ॥५॥

करुणे [१५]जडता दैन्यं ग्लानिरस्त्रं मृतिस्तथा ।
निर्वेद[१६]-श्चैव चिन्ता च व्याधिश्चैतेषु[१७] संश्रिताः ॥६॥

गर्वोऽसूया तथोत्साह आवेगो [१८]हर्ष एव च ।
[१९]क्रोधश्चपलता हर्षौ रौद्रेऽष्टावौग्र्यसंयुताः ॥७॥

असम्मोहस्तथोत्साह आवेगोऽमर्ष एव च ।
मतिश्चैव [२०]तथोग्रत्वममर्षो [२१]मद एव च ॥८॥

[१] A. स्मस्तैः
[२] L. ०र्देवतैः
[३] A. ०रोहित०
[४] K. L. तर्या०
[५] A. ०ने
[६] K. L. कुम्भस्वामिपदारविन्द०
[७] K. L. ०ग्
[८] A. यस्मिस्तु, K. L. यस्मिस्यू
[९] A. विरच्यते
[१०] L. omits निद्रा०
[११] A. ०रो
[१२] A. ०ग्र०, K. L. ०ग्रं
[१३] L. ०भिर्मरेभिस्तु
[१४] A. ०रन्यैस्तथा
[१५] L. जाडता
[१६] L. ०दे०
[१७] L. ०ष्ट
[१८] A. मद, L. हार्षं
[१९] K. L. omit this line and the next one.
[२०] L. तापो०
[२१] L. दद

रोमाञ्चश्च विबोधश्च [१]क्रोधोऽसूया धृतिस्तथा ।
गर्वश्चैव वितर्कश्च वीरे भावा [२]बुधैः स्मृताः ॥९॥

स्वेदश्च वेपथुश्चैव रोमाञ्चो गद्गदस्तथा ।
त्रासश्च मरणं चैव [३]वैवर्ण्यं च भयानके ॥१०॥

अपस्मारस्तथोन्मादो विषादो मद एव च ।
मृत्युर्व्याधिर्भयं चैव सप्त बीभत्ससंश्रिताः[४] ॥११॥

स्तम्भः स्वेदश्च मोहश्च[५] रोमाञ्चो विस्मयस्तथा ।
आवेगो जडता हर्षो [६]मूर्छाऽद्भुतगता नव ॥१२॥

निर्वेदप्रमुखा भावाः[७] शान्ते [८]संसूचिताः स्मृताः ।
एवं प्रतिरसं ज्ञेया भावाः संचारिणो बुधैः ॥१३॥

सात्त्विकाश्च पुनर्ज्ञेया[ः] सर्वे सर्वरसाश्रयाः ।
एवं सर्वेषु [९]काव्येषु नानाभावरसाश्रितम् ॥
बुद्ध्वा पुष्पावकीर्णानि कर्तव्यानि मनीषिभिः ॥१४॥

शृङ्गारहास्यकरुणा रसातिशयवृद्धये ।
[१०]प्रयोज्या कैशिकी वृत्तिर्यथालक्षणलक्षिता ॥१५॥

रौद्रे भयानके चैव बीभत्से च सदा बुधैः ।
प्रयोज्याऽऽरभटी वृत्तिः [११]काव्यशोभाकरी सदा ॥१६॥

वीरे [१२]रौद्रेऽद्भुते शान्ते वृत्तिः स्यात् सात्त्वती सदा ।
वीरे[१३] हास्येऽद्भुते ज्ञेया भारती [१४]वृत्तिरुत्तमा ॥१७॥

---

[१] K. L. क्रोधासूया  [२] K. L. पञ्चदश स्मृताः
[३] A. omits वैवर्ण्य etc. up to चैव in the third foot of the next verse and links up this verse with सप्त बीभत्ससंश्रिताः (fourth foot of the next verse).
[४] L. ०संस्थिताः  [५] L. मोहॅश्च  [६] A. मूर्छो०
[७] K. L. omit विसर्ग  [८] K. L. शान्त्युचिताः
[९] A. कार्येषु
[१०] L. omits this line and the next one. K. gives the portion प्रयोज्या कैशिकी…………भयानके चैव within two bracket-like signs (one at each end) presumably, intending its deletion; but this deletion is unwarranted.
[११] K. L. काचो  [१२] L. रौद्र०
[१३] K. L. वीरो हासो  [१४] K. L. भारतीप्रिया



श्यामः सितः कपोतश्च रक्तो गौरोऽसितस्तथा[१] ।
नीलः[२] पीतस्तथा शुक्लो [३]रसवर्णाः क्रमादमी ॥१८॥

विष्णुश्च [४]प्रमथश्चैव यमो रुद्रस्तथैव च ।
महेन्द्रः [५]कालसंज्ञश्च महाकालो विधिस्तथा ॥
तथा परशिवश्चैव रसानामधिदेवताः ॥१९॥

[६]एवं [७]नानारसपृथुगते भावसंवर्गणाभि-
श्चेतोहारिण्यखिलगुणिनामत्र संगीतराजे ।
राज्ञोपज्ञे[८] विविधरचना-रत्नकोशे रसाह्वे
भावावस्थारसजलनिधौ सूचनं पूर्णमे[त]त् ॥२०॥

इति श्रीराजाधिराज-[९]कालसेन-महीमहेन्द्रेण विरचिते संगीतराजे षोडशसाहस्र्यां संगीतमीमांसायां रसरत्नकोशे [१०]संचारिकोल्लासे भावावस्थानसूचकं नाम द्वितीयं परीक्षणं समाप्तम् ॥

---

[१] L. ०सितेस्तथा (the हलन्त mark below ०त् of स्यात् in the preceding line has been deciphered by L. as मात्रा on ०त०)
[२] K. L. omit विसर्ग  [३] L. सस०
[४] A. K. प्रमथा०  [५] A. काली
[६] A. reads this verse as follows :—
एवं नानारसगतं भाववर्गं गुणान्वितम् ।
रचितं कालसेनेन राज्ञा राजरसाभृता ॥
[७] K. L. नानारस (L. adds ०ना०) गते पृथक् भावसंवर्गणाभि (L. adds ०श्च before ०भि)
[८] K. L. ०ज्ञो
[९] K. L. महामण्डलेश्वरमहाराणाश्रीकुम्भकर्णमहीमहेन्द्रेण
[१०] K. L. अनुभावोल्लासे प्रतिरसं भावावस्थान०

# रससंकरादिनिरूपणं नाम तृतीयं परीक्षणम्

यत्र बीभत्सरौद्राद्या रसाः शृङ्गारनामनि ।
निमग्ना इव [1]दृश्यन्तेऽर्धशिवं तं नुमः शिवम् ॥१॥

अथातः कथ्यते सम्यक्[2](ग्) रससंकरनिर्णयः ।
[3]रसान्तरेण तेनैव वेति [4]स द्विविधो मतः ॥२॥

संभोगविप्रलम्भाख्य-[5]स्तेनैवेति [6]यथोच्यते ॥३॥

विनिश्चेतुं[7] शक्यो न सुखमिति वा दुःखमिति वा
प्रमोहो[8] निद्रा वा किमु [9]विषविसर्पः किमु मदः[10] ।
[11]तव स्पर्शे स्पर्शे किमपि परिमूढेन्द्रियगणो
[12]विकारः कोऽप्यन्तर्जडयति च सम्मोहयति च ॥४॥
[ Uttara. I. 35 ]

अत्र [13]सीतया [14]स्पृष्टेन दृश्यते, इति अवस्थाद्वयोपपत्तिः । केचिदेनं[15] संभोगमेव मन्यन्ते ।

रसान्तरसंकरो[16] द्विविधः स्वतन्त्रः[17] [18]प्रस्तुतोपयोगी चेति ।

तत्र स्वतन्त्रो यथा

राहोश्चन्द्रकलामिवाननचरी(रीं) दैवात् समासाद्य मे
[19]दस्योरस्य कृपाणपातविषयादच्छिन्दतः[20] प्रेयसीम्[21] ।
आतङ्काद् विकलं [22]धृतं करुणया विक्षोभितं विस्मयात्[23]
क्रोधेन ज्वलितं मुदा विकसितं चेतः कथं वर्तते ॥५॥

[1] K. दृश्यन्ते[ऽ]र्धं. L. दृश्यते[ऽ]र्धं    [2] K. L. सम्यक्प्रस०
[3] K. L. रसंतरेण    [4] K. L. मिद्विविधे (L. ०धो)
[5] A. ०तन्त्रे (त्रै ?) वेति, L. ०स्तोनैवेति
[6] L. यथाच्यते    [7] A. ०तुः
[8] A. प्रमोदो, K. L. प्रमोदा    [9] A. omits विष०
[10] A. मुदः    [11] A. तदस्यार्श
[12] Original विकारश्चैतन्यं भ्रमयति च सम्मीलयति च
[13] K. L. शी०    [14] K. L. स्पृष्टो न
[15] K. L. ०दैनं    [16] K. L. ०करा
[17] K. L. omit विसर्ग    [18] K. L. प्र (L. म्र०) स्तुतोन्नपयोगी
[19] A. दस्योदस्यपकृष्टपात०    [20] A. ०दंछीदतः, K. L. दछित तत्
[21] A. प्रेयसी    [22] A. सुतं    [23] K. L. omit ०त्



तत्र राहोश्चन्द्रकलामिवाननचरी[मि]ति दैवात् [1]समासाद्येति दस्योरस्येति प्रेयसीमिति यथाक्रमं विभावास्तत्र वागारम्भानुमेयाश्चा[2]-नुभावाः ।

द्वितीयो यथा [प्रस्तुतोपयोगी]—

स्त्रीणां पुंसां सखीनां च स्मरस्य तव मे विधेः ।
तस्या मम च चित्तेषु [3]व्यजृम्भन्त रसा नव ॥६॥

अत्र यथाक्रमं नवरसाः[4] कान्तानुपयोगिनः[5] । इति ।

तेषामङ्गाङ्गित्वं यथा हासः—

यथाऽभूदस्माकं प्रथमम-[6]विभिन्ना तनुरियं
[7]यतो न त्वं प्रेयान् वयमपि हताशाः[8] प्रियतमाः ।
इदानीं नाथस्त्वं वयमपि कलत्रं किमपरं
हतानां प्राणानां कुलिशकठिनानां फलमिदम् ॥७॥

करुणो यथा—

गते प्रेमाबन्धे प्रणयबहुमाने विगलिते
[9]निवृत्ते सद्भावे जन इव जने[10] गच्छति पुरः ।
तदुत्प्रेक्ष्योत्प्रेक्ष्य प्रियसखि-[11]गतांस्तांश्च दिवसान्
न जाने को हेतु-[12]र्दलति शतधा यन्न हृदयम्[13] ॥८॥
[ Amaru. 43 ]

[14]न चात्रानुरागावृत्तिशङ्का कार्या, गतान् [15]दिवसानुत्प्रेक्ष्योत्प्रेक्ष्य इति विरोधात् ।

[16]अन्तर्भावे तु रसस्य परमोत्कर्षः । यथा—

अद्वैतं सुखदुःखयोरनुगतं सर्वास्ववस्थासु यद्
विश्रामो हृदयस्य यत्र [17]जरसा यस्मिन्नहार्यो रसः ।
कालेनावरणात्ययात्परिणते यत् [18]स्नेहसारे स्थितं
भद्रं तस्य सुमानुषस्य कथमप्येकं[19] हि तत्प्राप्यते ॥९॥
[ Uttara. I. 39 ]

[1] K. L. समाचाद्यति    [2] K. L. ०श्च तेऽनुभावाः
[3] A. विजृम्भित, K. L. विजृम्भन्त    [4] K. L. omit विसर्ग
[5] A. K. L. ०पायोगिनः    [6] K. L. ०मतिभिन्ना
[7] K. L. ततो    [8] K. L. omit विसर्ग
[9] A. omits ०वृत्ते सद्भावे ज० and gives a confused reading of the subsequent portion of the foot as ०न इव मजेछति ते पुरः
[10] K. L. जनो    [11] K. L. ०गवांस्ताश्च
[12] K. L. ०हलति    [13] A. हृदये    [14] A. omits न चात्रानुरा०
[15] A. दिवसान् प्रेक्ष्योत्प्रेक्ष्य, L दिवसुनुत्प्रेक्ष्येत्प्रेक्ष्य
[16] K. अन्तरभावे, L. अन्तर्भा    [17] K. L. रजसा
[18] Original प्रेम०    [19] L. ०स्येक

अथैषामुच्यते[१] सम्यक्[२] (ग्) विरोधोऽन्योन्यगोचरः ॥१०॥

यत उक्तम् —

अनौचित्यादृते नान्यद्रतभङ्गस्य कारणम् ।
प्रसिद्धौचित्यसंबन्धो[३] रसस्योपनिषत् [४]परा ॥११॥
[ Dhvanyāloka III ]

एवमौचित्यवशतो [५]विरोधिरसाभासादि परिहृत्य काव्यं कर्तव्यम् ॥

रसः सर्वोऽपि संपूर्णस्तिरोधत्ते रसान्तरम् ।
कविप्रसिद्धिमाश्रित्य तथा क्वापीति दृश्यते ॥१२॥

[६]तथात्र श्रृङ्गारस्योपनिबन्धकौ वीररौद्रौ[७] । जुगुप्साशमयोः[८] कृपा (?) । तत्र वीररसाद् विरहच्छेदो यथा शान्तनवे । रौद्रात् (द्) यथा —सू(शू)र्पणखायां[९] श्रृङ्गारविच्छेदः । जुगुप्सातो यथा—श्रृङ्गारविरोधः ।

मुक्ताहारलता-रणन्मणिमया [१०]हैमास्तुलाकोटयो
रागः[११] कुङ्कुमसौरभः सुरभयः पौष्पा विचित्राः स्रजः ।
वासश्चात्र(श्चित्र) दुकूलमल्पमतिभि-[१२]र्नार्यामिदं कल्पितं
[१३]बाह्याऽन्तः परिपश्यतां तु निरयो [१४]नारीति नाम्ना [१५]मतम् ॥१३॥
[ Prabodha. IV 9 ]

शमाद्[१६] यथा —

बाले लीलामुकुलितमृगीमन्थरा दृष्टिपाताः[१७]
किं क्षिप्यन्ते विरम विरम व्यर्थ एष श्रमस्ते ।
संप्रत्यन्ये वयमुप[१८]-रतं बाल्यमास्था वनान्ते
क्षीणो मोहस्तृणमिव जगज्जालमालोकयामः ॥१४॥

हासश्च करुणाभयाभ्यां [१९]नश्यति । शोकश्च रौद्रशान्तिभ्यां नश्यति । तत्र रौद्राद् यथा—[२०]"यो यः शस्त्रं बिभर्ति"—इति । शमाद् यथा—

---

[१] L. ०च्यात [२] K. L. omit ०क् [३] K. L. ०बद्धो
[४] A. K. L. परेनि [५] K. L. ०विरोध०
[६] K. L. तत्र [७] A. ०रौद्रे [८] L. शमायाः
[९] A. ० याः [१०] A. हेमा० [११] K. L. रामः
[१२] A. ०न्नायामिदं, K. L. ०र्भार्या (L. ० या०)मिदं, original ०र्नार्यमिहो
[१३] A. K. L. बाह्यो० [१४] L. omits नारीति [१५] Original कृतः
[१६] K. L. ०त् [१७] K. L. omit विसर्ग
[१८] L. repeats ०प० [१९] A. L. नश्यन्ति
[२०] यो यः शस्त्रं बिभर्ति स्वभुजगुरुमदात् पाण्डवीनां चमूनां
यो यः पाञ्चालगोत्रे शिशुरधिकवया गर्भशय्यां गतो वा ।
यो यस्तत्कर्मसाक्षी चरति मयि रणे यश्च यश्च प्रतीपं
क्रोधान्धस्तस्य तस्य स्वयमिह जगतामन्तकस्यान्तकोऽहम् ॥ [Veṇī. III. 32]



प्रादुर्भवन्ति वपुषः कति नाम कीटा यान् यत्नतः किल तनोर-[१]पसारयन्ति ।
मोहः क एष जगतो यदपत्यसंज्ञां तेषां विधाय [२]परिशोषयति[३] स्वदेहम् ॥१५॥
[ Prabodha. V 21 ]

रौद्रः शान्त्या विनश्यति । [यथा —]

सोऽपि स्ववीर्यादवतार्य भारं भूमेः समुत्साद्य[४] कुलं नृपाणाम् ।
[५]प्रशान्तकोपज्वलनस्तपोभिः श्रीमान् मुनिः शाम्यति जामदग्न्यः ।१६।

वीरश्च भयशान्तिभ्यां यथा—

योषिन्मध्ये सभामध्ये सुलभाः [६]शस्त्रपाणयः ।
शस्त्रसंघट्टसंजातविस्फुलिङ्गेषु दुर्लभाः ॥१७॥

शान्तेस्तु पूर्वमेवोदाहृतम् । भयं शान्तेर्विनश्यति ।

[यथा—]

अभयं सर्वभूतेभ्यो [७]यैर्दत्तं करुणात्मभिः ।
आत्मनिष्णातमनसस्ते जीवन्त्यकुतोभयाः ॥१८॥

पौर्वापर्यं न चात्रैव विवक्षाऽऽस्पदमिष्यते ।
[८]कश्चिदेकक [९]उद्रिक्तः परस्परविरोधिषु ॥१९॥

रसेषु सोऽपि तं [१०]साक्षात्तिरस्कर्तुं प्रगल्भते ।
तिरस्करोति श्रृङ्गारो [११]बीभत्समपि तद्यथा ॥२०॥

ईदृक् सुगन्धि-प्रविजृम्भमाणं [१२]भूषादिभिः कान्तिमनोहरं च ।
अङ्गं स्त्रिया मोक्षपथं ब्रुवाणाः पौराणिका हन्त न [१३]दृश्ययोग्याः ॥२१॥

शान्तितिरोधानं यथा —

तावन्मनसि विवेको विदुषामपि शास्त्रसंभवः स्फुरति ।
निपतन्ति दृष्टिविशिखा यावन्नेन्दीवराक्षीणाम् ॥२२॥

अनेनैव पथा ज्ञेयो विरोधोऽन्योन्यसंश्रयः ।
भावानामपि [१४]विद्वद्भिस्तस्योदा[१५]-हृतयो [१६]यथा ॥२३॥

---

[१] A. K. L. ०रवतारयन्ति [२] A. K. L. परितोष०
[३] K. L. omit ०ति [४] K. L. ०त्साय [५] L. प्रशोन्त०
[६] L. शास्त्र० [७] L. यो०
[८] K. L. यः कश्चिदेक [९] K. रुद्रिक्तः, L. राद्रिक्तः
[१०] K. L. साक्षास्ति० [११] A. बि०
[१२] L. भूषाहभिः [१३] K. L. दृष्ट०
[१४] L. नि० [१५] A. ०स्तस्यादो०
[१६] L. स्तथा

स्मृतिमूर्छनयोर्ज्ञेयस्तथा निर्वेदहर्षयोः ।
विरुद्धा [1]अपि ते काव्ये कविभिर्विषयान्तरे ॥२४॥

मज्जनोन्मज्जनन्यायाद् बध्यमानास्तथा पुनः ।
ऊह्यमानाश्च नो दोषमावहन्तीति[2] सम्मतम् ॥२५॥

यथा—

[3]एकं ध्याननिमीलनान्मुकुलितं चक्षुर्द्वितीयं पुनः
पार्वत्या वदनाम्बुजे स्तनतटे शृङ्गारभारालसम् ।
अन्यद् दूरविकृष्टचापमदन-क्रोधानलोद्दीपितं
शम्भोर्भिन्नरसं समाधिसमये[4] नेत्रत्रयं पातु वः ॥२६॥

[ Quoted in S. D. 7. 30 ]

अत्र स्त्रीणां पुंसामित्यादि-विषय-भेदादविरोधो बोद्धव्यः । एकविषयत्वेऽपि मज्जनोन्मज्जनभेदाद[5]-विरोधो यथा ।

तटस्थं[6] नैराश्यादपि च कलुषं विप्रियवशाद्
वियोगे दीर्घेऽस्मिन् किमिति घटना[त्] [7]स्तम्भितमिव ।
प्रसन्नं [8]सौहार्दाद्दयितकरुणैर्गाढकरुणं
द्रवीभूतं प्रेम्णा तव हृदयमस्मिन् क्षण[9] इव ॥२७॥

[ Uttara. III. 15 ]

[10]येनाश्रितानां सर्वेषां [11]रसानां संकरः कृतः ।
तेनात्र कथितो राज्ञा रससंकरनिर्णयः ॥२८॥

इति श्रीराजाधिराज-[12]कालसेन-महीमहेन्द्रेण विरचिते संगीतराजे षोडशसाहस्र्यां संगीतमीमांसायां रसरत्नकोशे संचारिकोल्लासे रससंकरादिनिरूपणं [13]नाम तृतीयं परीक्षणं समाप्तम् ॥

[1] A. omits अपि ते काव्ये कवि॰ [2] L. ॰ती
[3] A. omits एकं ध्यान॰, L. ध्यानं [4] A. ॰समयो तत्र
[5] A. ॰भेदादयो विरोधो [6] A. ॰स्था
[7] K. L. स्तम्भनमिव
[8] K. L. सौहार्या॰, original सौजन्या॰
[9] A. K L. क्षणमिव [10] A. एना॰
[11] L. रसना॰ [12] K. L. श्रीकुम्भकर्ण॰
[13] K. L. omit नाम and समाप्तम् ।

---

## ग्रन्थसमाप्तिर्नाम चतुर्थं परीक्षणम्

सर्वाभीष्टप्रदातारं शङ्करं लोकशङ्करम् ।
सर्वविघ्नच्छिदं[1] वन्दे ब्रह्माद्यैरभिवन्दितम् ॥१॥

यदि प्राचां ते ते जगति [2]जयिनः सन्ति शतशो
निबन्धाः संगीते स्वमतिपरिणामावधिकृताः[3] ।
तथाऽप्येतल्लोकेऽभिनवभरतत्वान्नृपतिना
कृतं [4]कृष्णेनेदं जयति तत एवाधिकगुणम् ॥२॥

संगीतराजव्याजेन राजराजसमर्पितैः ।
पञ्चरत्नाकरैः [5]पञ्चवक्त्रस्तुष्यतु पूजितः ॥३॥

संगीतराजे संगीत-रत्नकोशसमुद्भवाः ।
पञ्चरत्नाकराः सन्तु विदुषां कण्ठपीठगाः ॥४॥

क्वचित् [6]कैश्चित् कैश्चित् क्वचिदपि यदि [7]स्वस्वधिषणा-
मुपादाय प्रोक्तं विविधमुनिवाक्यानुगमनात् ।
तथाप्येतत्तेभ्यः किमपि सविशेषं यदिह[8] ताः
परं सम्यङ्‌ न्यस्ता भरतमुनिवाचः स्फुटतराः ॥५॥

कुर्वाणः फणिराजवाक्यपदवी-सम्मीलनोन्मीलनं[9]
भिन्दानः कठिनातिरेकिविरसप्रस्तारवाग्[10]-डम्बरम् ।
छिन्दानः कवि-[11]वर्त्मरोधविसरत्संदेहवाग्वल्लरी (रीं)
वर्ण्यः किं भुवि [12]कालसेननृपतेर्वाचां विलासः परैः ॥६॥

सन्त्येव[13] [14]प्रतिवेश्मकेऽपि कवयो येषां वचश्चातुरी
[15]विद्वद्धृद्गतगर्वकर्तनविधौ जागर्ति सत्कर्तरी ।
वर्ण्यः कोऽपि महीमहेन्द्रतिलकः [16]श्रीकालसेनः कवि-
र्यद्वाणी कविवाणि-[17]तापहरणे गङ्गोज्ज्वला भ्राजते ॥७॥

[1] A. ॰दे [2] K. L. जयति
[3] A. omits विसर्ग [4] K. L. कुम्भेनेदं [5] A. पंक्त्र (?)
[6] A. केश्चित्, L. क्वैचित्; किञ्चित् can be a possible reading.
[7] A. स्वस्थ॰ [8] A. ॰हि
[9] K. L. ॰न्मूलनं (L. looks like ॰न्मृलनं) [10] L. ॰वागु॰
[11] K. L. ॰वत्म॰ [12] K. L. कुम्भकर्ण॰
[13] K. सन्त्येवं, L. सत्येवं [14] A. प्रतिवेश्म वेश्म
[15] A. विद्वद्गर्वभवैकनर्तनविघौ, K. L. विद्वद्धृद्गतभावकर्तनविघौ
[16] K. L. श्रीकुम्भकर्णो [17] K. L. ॰काव्य॰

के के न जाता:[1] किल सूर्यवंशे महीभुजः सर्ववसुन्धरेशाः ।
ते राममासाद्य गताः प्रतिष्ठां रामायणादेव कवित्वमुख्यात् ॥८॥

श्रंशस्य विश्वस्य तथोपकृत्यै कृतो मया ग्रन्थविधौ प्रयासः ।
सद्भिः स नेयः परमां प्रतिष्ठां सौजन्यसौहार्दगुणैरुपेतैः ॥९॥

यद्यस्ति चास्मिन् गुणिनामनुग्रहस्तद्व्यर्थयाऽ[2]भ्यर्थनया[ऽ]सतां किम् ।
अज्ञस्य विज्ञस्य च वक्त्रदेशे किमिक्षुदण्डोऽन्यगुणं बिभर्ति ॥१०॥

गिरीशनटनस्खलन्मुकुटविस्रवज्जाह्नवी-
[3]हिमाद्रिशिखरोपरि-प्रपतदम्बुसद्वीचिभिः ।
समान-[4]गुणसौरभो नृपति-[5]कृष्णवाक्योत्करः
कथं नु[6] समतामिया-[7]दपरवाहिनीवारिभिः ॥११॥

[8]वक्त्राद् वर्णपदं स्रवन् मधुरसं बिभ्रत् कलाकौशलम्[9]
कुर्वत् [10]काकुविशेषविभ्रमरसं स्रंसत् परोक्तिक्रमम् ।
पुष्यत् सर्वरसैकचारुभणितं[11] [12]श्रीकृष्णभूमीभृतो[13]
वाक्यं कस्य चमत्कृतिं न तनुते श्लिष्य-[14]ल्लसद्वृत्तिकम् ॥१२॥

शश्वद्विश्वजनीनकर्मनिरताः सन्मार्गसंदर्शकाः[15]
[16]सम्मानैकधनार्थिनः सहृदयाः सन्तः सुहृन्मानिनः ।
तेषामेष निवेशितः पदयुगस्याग्रे मया भक्तित-
स्ते गृह्णन्तु कृपापरा मयि परं वाक्यप्रसूनाञ्जलिम् ॥१३॥

यं प्रासूत समस्त-[17]पार्थिववरं श्रीतामराजो नृपः
सौभाग्यैकनिकेतनं गुणवती [18]जस्माम्बिका यं सुतम् ।
[19]श्रीमत्कृष्णनरेश्वरेण रचितस्तेनैककल्पान्तरं
स्थाणुत्वं भजता मनीषिसहितः संगीतराजश्चिरम् ॥१४॥

---

[1] K. L. omit विसर्ग [2] L. ०व्यर्थयाभ्यर्थयाभ्यर्थनया
[3] L. omits ०माद्रि० [4] K. L.गुणा सौरंभो [5] K. L. ०कुम्भ०
[6] A. न [7] A. ०दपरि० [8] A. K. L. बलाद्
[9] A. omits ०शलम् कुर्वत्, का० L. ०कोशलम् [10] K. L. कातु ( नु ?)
[11] K. ०ति [12] K. L. श्रीकुम्भ० [13] A. भूमि भृतो
[14] K. L. ०ल्ललद् [15] K. L. omit विसर्ग [16] L. सन्मानेकनार्थिनः
[17] K. L. ०राजशिरोरत्नं नृपो मोकलः (One syllable is missing between राज० and ०शिरो०) [18] K. L. सौभाग्यदेवी सुतः (तम्)
[19] K. L. read these two lines as follows :—
आचन्द्रार्कमुदर्कहेतुरधिकं संगीतराजश्चिरं ।
जीयात् कुम्भनरेश्वरेण रचितस्तेन(ना)विकल्पाश्रुणा(?) ॥



श्रीमद्विक्रमकालतः परिगते[1] नन्दाभ्रभूतक्षितौ
वर्षे [2]बाणनगेन्दुशाकसमये संवत्सरे च ध्रुवे[3]
ऊर्जे मासि तिथौ हरे रविदिने हस्तर्क्षयोगे तथा
योगे[4] चाभिजिति स्फुटोऽयमभवत् संगीतराजाभिधः ॥१५॥

ग्रन्थेऽत्र [5]पञ्चाखिलरत्नकोशा उल्लाससंज्ञाः खलु विंशतिश्च ।
परीक्षणानां गदिता ह्यशीतिः संख्या सहस्राणि च षोडशात्र[6] ॥१६॥

[7]कामेश्वरी-व्याकरणेन गीतगोविन्दवृत्त्या सुकृतं यदत्र ।
संगीतराजेन च तेन [8]गौरी हरिर्हरः प्रीतिमवाप्नुवन्तु ॥१७॥

श्रीः श्रीः श्रीः श्रीः श्रीः श्रीः श्रीः श्रीः

[9]इति निःशङ्कनिर्भयमल्लेन सकलभूवलयैकवीरेण कलाकल्याणकुशलेन श्रीकालसेनेन द्वादशसहस्रजनस्थानप्रभृतिवसुन्धरासमुद्धरणैकधीरेण श्रीजगदीश्वरवनदेवनिजगणेन श्रीकामेश्व-

---

[1] L. ०गते दंनादाभ्रभूततक्षितौ [2] K. L. क्षाम्यतलेन्दु० [3] A. ध्रुवम्
[4] L. योग [5] K. L. पञ्चोत्तर० [6] L. ०शात्
[7] K. L. चण्डीश [त]०, L. चण्डी शश०; in L. the portion beginning with चण्डी० and ending with संगीतराजेन is cancelled with a horizontal line; apparently this cancellation has been made by the hand which has written the colophon in agreement with A. and replaced the original colophon with the changed one beginning with the next folio.
[8] K. L. चण्डी
[9] K. reads the colophon as follows. L. agrees with K. upto अजयजयाजयविभ० where folio 64 (643) ends. Curiously enough the first epithet इति श्रीसरस्वती० etc. has been deleted in L. and the subsequent six epithets (upto अजयजयाजयविभ०) have been kept intact. Really speaking, the whole portion beginning with चण्डीशन० and ending with अजयजयाजयविभ० should have been deleted. The next folio in L. 65 (644) begins in a changed handwriting which continues till the end (five folios in all). The changed handwriting begins with the last verse of the परीक्षण (verse 17) and the reading agrees with A. After this verse the colophon is written in agreement with A., beginning with इति निःशङ्क etc; the link with the previous folio ending with अजयजयाजयविभ० is clearly broken.

रीचरणकिङ्करेण श्रीब्रह्माद्रिविभुना प्रथमप्रख्याततामराज-आमोदराज-रामराज-पेङ्कराज-म्हाङ्कराजतामराजेन्द्रप्रभृतिसकल-महीपालमौलि(A. ०मौली०)माणिक्यरचितसिंहासनादिसमस्तराजचिह्नाधिष्ठातृ(A. ०ष्ठात्रि०)नरेश्वरेण अगस्तिपुरनिरस्तसमस्तवैरिवर्गेण कामाक्षाप्रसादासादितकुन्तीपुरेण शुद्धोद्धतोद्धतपति(L. ०शुद्धोद्धतपति०)निपातपटुतरतरवारिधारेण उद्धतपुरनारीनयननीर-(L. gives a cross sign on अगस्ति० and निरन्तर०; the intention is not clear)निरन्तर-सारणीसमाप्यायित-शौर्यतरुवरेण भीष्मपुरजयानीतानेकराजकन्यारत्नेन मणिपुरमर्दनदर्शितशौर्येण कल्याणपुरजयाजितजामदग्न्येन स्थानवलयितानेकदरीपरिसरपरित्रासितमनीरवीरेण श्रीपुरग्रहणसंवर्धितयशोभरेण वाटिकाचलग्रहणजनितकीर्तिपुर(पूर)पराजिताचलनायकेन राजपुरी(L. omits ०पुरी० and gives two vertical strokes on the top of ०ज० in राज०)विध्वंसनचारुचापरचितेन सुवर्णगिरिखण्डनाखनिकत्रङ्कुस्तेन नवसारी(L. writes ०पुरी० within two cross signs after नवसा०)घनदेवीयुवतीजनवदनयामिनीनार्यसिंहिकासुतायमानकरालवालेन पाटलीरणधरणिधीरधनुर्धोङ्कारमुखरितत्रिभुवनेन तारापुरज्वालनसमुद्भूतधूममलिनीकृतसकलवैरिवदनेन कुङ्कुमपुरजयदर्शितसिंहविक्रमेण संज्ञापुरोपार्जितरत्नेन वेदिकागिरिनिर्दलनदारुणेन कुरङ्गगिरिकोट-विघट्टनलम्पटोरुनाशीरेण पुण्यस्तम्भोद्धूलनोद्भूतादभुतधैर्येण संगमनीरदुर्गोद्धरणोद्धृतसकलाधीश्वरेण शुक्लपुरसमूलोन्मूलन-(L. omits ०न०)प्राप्तजयश्रिया गिरिपुरडुङ्गरग्रहणसार्थकीकृतोग्राग्रहेण दमनपुरविध्वंसनबन्दीकृतयवनीनिचयेन आमर्दकगिरिशिखरोपरिपरिभावितशकि(क)निकरेण महिषमेरु-

K. इति श्रीसरस्वतीरससमुद्भूतकैरवोद्यानननायकेन अभिनवभरताचार्येण मालवाम्भोधिमाथमन्थमहीधरेण योगिनीप्रसादासादितयोगिनीपुरेण मण्डलदुर्गोद्धरणोद्धृतसकलमण्डलाधीश्वरेण अजयजयाज(जे)यविभवेन यवनकुलाकाल-कालरात्रिरूपेण शाकम्भरीरमणपरिशीलन-परिप्राप्तशाकम्भरीप्रमुखशवितत्रयेण नागपुरोद्धूलनधर्षितनागपुरेण अर्बुदाचलग्रहणसंदर्शिताचलाद्भुतप्रतापेन गुर्जराधीशधीरत्वोन्मूलन प्रचण्डपवनेन श्रीमत्कुम्भलमेरु(the ु मात्रा on ०र० is cancelled) नवीननिर्मितसुमेरुणा श्रीचित्रकूटभीमस्वर्गता(K. ०स्वर्गीकृता०)याथार्थीकरणरचित-चारुपथेन मेदपाटसमुद्रसंभवरोहिणीरमणेन अरिराजमत्तमातङ्गपञ्चाननेन प्रचण्डत्र्यवनदवदहनद[ा]वानलेन प्रत्यर्थिपृथिवीपति-तिमिर-तति-निराकरण-प्रौढप्रतापमार्तण्डेन वैरिवनितावैधव्यदीक्षादानदक्षोद्दण्डकोदण्ड-दण्डमण्डिताखण्डभुजादण्डेन भूमण्डलाखण्डलेन श्रीचित्रकूटविभुना अभ्युष्टतमनरेश्वरेण गजनरतुरगाधीश-राजत्रितयतोडरमल्लेन वेदमार्गस्थापनचतुराननेन याचककल्पनाकल्पद्रुमेण वसुन्धरोद्धरणादिवराहेण परमभागवतेन जगदीश्वरीचरणकिङ्करेण भवानीपतिप्रसादाप्तापसादवरप्रसादेन राजगुर्वादिविरुदावलीविराजमानेन राजाधिराजमहाराज-महाराणा-श्रीमोकलनन्दनेन राजाधिराजश्रीकुम्भकर्णेन विरचिते संगीतराजे षोडशसाहस्र्यां संगीतमीमांसायां रसरत्नकोशे संचारिभावोल्लासे ग्रन्थसमाप्तिपरीक्षणं चतुर्थं समाप्तम् ।।छ।। शिवमस्तु ।।छ।। श्रीः ।।छ।। श्रीः ।



जयाजेयविभवेन शाकम्भरीरमणपरिशीलनपरिप्राप्तशाकम्भरीपरितोषितशाकम्भरीप्रमुखशवितत्रयेण निजभुजशौर्यवशीकृत-बग्गुलराजप्रमुखमहानिधानेन बेड(डु)रभूपालराजकृतसंस्थापनेन नराणरणकर्मकर्मठेन तुजारखानमानमर्दनगृहीतराज्यलक्ष्मीसकलभाण्डागारनिचयेन अलङ्गगिरिगहन-गह्वरकुहरविहारि-वैरिवीर-सिन्धुरमर्दननिर्दयकण्ठीरवेण अष्टादशगिरिशिखरपरिवारिताञ्जनाद्रिविजयविख्यातवीर्यगर्वेण (L. transposes अलङ्गगिरि० etc. and अष्टादश० etc.) सप्तविंशतिसहस्रमहाराष्ट्रधराविधूनन-प्रबलप्रभञ्जनेन सप्ततिसहस्रगु(L. ०गू०)र्जराम्भोधिमाथमन्थमहीधरेण महदम्बमातृकापुरोद्धूलन-धर्षिता(त)महोरगपुरेण पलायमान-अजीमखान-सकलगृहीतजयश्रिया जाङ्गलस्थलजलधितरत्तुङ्गतरङ्गसंरम्भ-कुम्भ-संभवेन वस्तिसोपार-कलहकलित-कुन्तजनित-कुन्दावदात-कीर्तिधवलित-दिगन्तरेण शशकगिरिलुण्टनपटुतरेण श्रीवनदेवस्वामिप्र[ा]सादरचना-पर-परमेश्वरेण श्रीत्र्यम्बकेश्वरसन्निधिकीर्तिस्तम्भोन्नतजयस्तम्भेन श्रीब्रह्मगिरि-भौमस्वर्गतायथार्थीकरणरचित-चारुपथेन श्री (L. omits श्री०) कामाक्षागिरिनवीननिर्मिति-पराजित-सुमेरुणा श्रीमहिषाचलोपरि-श्रीहरिशरणरचिताचलदुर्गेण रायंगुरुचायंगुरु-सेलगुरु-रायांचापरमगुरु-वागाङ्गलां-रायाञ्चा-मुहवनरायहिंसल्लराय-भाचल्ल-पूर्व-पश्चिमोत्तरदक्षिणचतुर्दिशां-रायाञ्चा-आम्बुला-इत्यादिविरुदावली-विराजमानेन अभ्युष्टतमनरेश्वरेण सबलराजसन्मूलनाचार्येण दुर्बलराजसंस्थापनाचार्येण पितृवैरसमुद्भूत-रोषपोषणमहीपतिमत्तमातङ्गमस्तकाङ्कुशेन अभिनवभार्गवेण राजभुजबलभीमेन हिन्दूकराजगजपतिना आसनसिंहासनसितातपत्र-माणिक्यमालामण्डितवातान्दोलित-जयपताका-कनकदण्ड-चन्द्रावदात-चरचामरयुगल-मकरध्वजादिराजराजालंकरणावलोकन-मत्सरितमानसेतरनृपालमौलिनिहितचरणेन(A. and L. leave blank space for two letters between निहि० and ०त of ०निहित०) नलनहुष-धुन्धुमार-भरत-भगीरथमान्धातृ-मेधातिथि-प्रभृति-चिरराजरत्नोदात्त-चरणेन वेदमार्ग(A. leaves blank space for वेद०)-स्थापनचतुराननेन सर्वदात्र्यम्बकादिगोदाविमुक्तिसमस्तामुक्त-प्रवितीर्णमुक्तिमुक्ताकलापेन श्रीब्रह्मगिरिसन्निधिकृतयुगधर्मानुवृत्तिब्रह्मवृन्दाधिष्ठितानेकयज्ञाद्यखिलसुकृत-कृतसत्यलोकेन परमभागवतेन अभिनवभरताचार्येण संगीतमीमांसानिर्माणापरप्रभाकरेण प्रबन्धराजश्रीगीतगोविन्द-निर्माणपरितोषितराधामाधवेन कामाक्षास्तुतिकरणाराधित-कामेश्वरी-चरणकमलेन श्रीगीतगोविन्दटीका-रचनवर्णित-साङ्गशृङ्गार-रसेन सकलराजगेय(सकलवाग्गेय०)-कार-तोडरमल्लेन सकलकविराज-चक्रचूडामणिना वीणावादनप्रवीणेन सुशारीरशालिना पद्मनगरजनस्थानगोदावरीविराजमान-म्लेच्छोच्छेदितचिरकालधर्मसंस्थापनेन संस्कृतप्राकृत(A. reads भाषा० in the place of प्राकृत०) महा(A. ०माहा)-राष्ट्रभाषातैलिङ्गकर्णाटभाषारचित-नाटकराजचतुष्टयेन याचकजनकल्पनाकल्पद्रुमेण वसन्तसमयसमागतसमस्तसामन्त-सीमन्तिनी-सीमन्त-सिन्दूरपूरदूरोद्धूलन-प्रकटितप्रौढप्रतापेन निसर्गदुर्ग(दुर्ग्र)-हदुर्गवर्ग-दुर्गमप्र[ा]कारपरिखापरिपात-परिखिद्यमान-परिशङ्कितपरिजनपरिवीतप्रत्यर्थिनी-नितम्बिनी-लुण्ठाकार्गलादीर्घभुजायुगलेन धीरोदात्त-धीरशान्त-धीरोद्धत-धीरललित-चतुर्विध-नायकगुणग्राम-विचार-चातुरी-चतुराननेन अष्टविधनाय(यि)काहावभाव-विवेकोद्दामो (L. repeats ०द्दामो०)-द्दीपित-स्मरविलोकनानुभूयमानशृङ्गाररस-सान्तरनिरन्तरान्तरानन्देन नाटक-नाटिकाऽऽख्यायिकाप्रहेलिका-(L. ०प्रलेहिका)कलापकौशलेयेन(०कौशल्येन) भारतीयरसदृष्टिभावितभावनाऽभिनव-भरताचार्येण नन्दिकेश्वरमता-

नुवर्तनाराधित-त्रिनयनेन परमपराक्रमेण अथ(A. ०परार्जनेनाथ)बृहन्नटेन सतताराधितधर्मेणाथ वृकोदरेण श्रीसरस्वतीरस-समद्भूत-कैरवोद्याननायकेन यवनकुलाकाल-कालरात्रिरूपेण सततपराभूतसमागतसूर्यवंशीन्द्रसेन-राजराज्यसंस्थापन-दृढाङ्गीकारेण गूर्जरधराधीश-महमदसुलतानधीरत्वोन्मूलन-प्रचण्डपवनेन त्रिसन्ध्यक्षेत्रसमुद्रसंभवरोहिणीरमणेन अरिराजमत्तमातङ्गपञ्चाननेन प्ररूढपत्रयवनदवदहनदावानलेन प्रत्यर्थिपृथिवीपति-तिमिरततिनिराकरण-प्रौढप्रतापमार्तण्डेन वैरिवनितावधव्यदीक्षादान-दक्षोद्दण्ड-कोदण्ड-मण्डिताखण्डभुजादण्डयुगलेन भूमण्डलाखण्डलेन गजनरतुरगाधीशराजत्रितयतोडरमल्लेन वसुन्धरोद्धरणादिवराहेण भवानीपतिप्रसादाप्तापसाद(L. ०प्रसादाप्तसाद०)वरप्रसादेन अनन्यमल्लीकगर्वखण्डन-मुशलहस्तबलभद्रपराक्रमेण महाराजाधिराज-महाराणा-श्रीमृगाङ्कतामराजेन्द्रनन्दनेन महाराज्ञीश्रीसौभाग्यवतीजसमाम्बिकाहृदयनन्दनेन विविधविज्ञान-विज्ञ-चमत्कारि-चातुरीधुरीण सकल-सीमन्तिनी-शिरोमणि-रूपलावण्यलज्जालक्ष्मीनिधान-शृङ्गाररसरसीशतराजकन्याप्रवर-निकुम्भराजन्यवंशावतंसमहाराज्ञीश्रीकर्मवतीलषुमादेवीहृदयाधिनाथेन श्रीमहाराजाधिराजकालसेनमहीमहेन्द्रेण विरचिते संगीतराजे षोडशसाहस्र्यां संगीतमीमांसायां रसरत्नकोशे संचारिविभवोल्लासे ग्रन्थसमाप्तिपरीक्षणं चतुर्थम् ॥ रसरत्नकोशश्च समाप्ति(प्तिं) समगादिति विततमतीनामभिमतसिद्धिरस्तु ॥ शुभं भवतु ॥

शाके वेदकरश्रुतिक्षितिमिते संवत्सरे दुन्दुभौ
चैत्रे मासि सिते रवौ फणितिथौ ब्राह्म्ये तथाऽऽयुष्मति ।
योगे बालवसंज्ञके तिथिदले कामेश्वरीपर्वते
कामाक्षावनदेवपादयुगलध्यानाप्तराज्यश्रियः ॥
लक्ष्मीपङ्कजभु(भू)भुवो(जो)रनुदिनं संपादयन्नैक्य(क) तां
स्वर्भूभोगिपुरेषु लोकमहितं विस्फारयन् सद्यशः ।
आस्ते यो नृपतामराजतनयः श्रीकालसेनो विभु-
स्तद्भाण्डारनिकेतनस्थितममुं संगीतराजं सुधीः ॥*

* L. reads after this verse—श्रीमग्दार्ग्यकुलप्रजोनिधिकुला and abruptly breaks here. Dr. C. Kunhanraja's edition (Introduction p. XLVIII) gives the complete text of this verse followed by a few lines in prose as follows:—

श्रीमद्गार्ग्यकुलप्रजो निधिकुलावासालयाद्देवता-
पादद्वन्द्वविराजितैकसुमनाः श्रीरामचन्द्रात्मजः ।
सद्विज्ञान-नरेश्वराञ्चितगुणः सन्मानशाली लस-
द्युक्तिः प्रोद्भवचातुरीचतुरवाक् श्रीम्हालभट्टोऽलिखत् ॥

स्वस्ति श्रीनृपशालिवाहनशके १८२४ दुन्दुभीसंवत्सरे चैत्रशुद्धरवौ रोहिणीनक्षत्रे आयुष्मन्नाम-योगे बालवकरणे एतस्मिन् दिने कामगिरिस्थाने राज्ञः श्रीकालसेनस्य नाट्यशालास्थितनर्तकीनां पठनार्थं निधिवास-स्थित-रामेश्वरभट्टसुतम्हालसाभट्टेन संगीतराजस्य पुस्तकं लिखितम् ॥



Ms. A. completely omits this verse and the subsequent prose portion, although Dr. C. Kunhanraja seems to ascribe this whole portion to A., and L. breaks off in the first line of the verse. The source of Dr. C. Kunhanraja's text is not, therefore, known. It is obvious that he had access to some unnoticed Ms. which has somehow been identified with A. so far as this portion is concerned. The abrupt break in L. also suggests that the portion reproduced by Dr. C. Kunhanraja was available to L. (perhaps in part) through some source other than A.

[A. gives the following list of contents which is omitted by L. This list is compared below with the titles of परीक्षणs found in text.]

[ *पाठ्यरत्नकोशः ]

| List of contents given by A. | | | *Titles* of '*Parīkṣaṇas*' (this column is added by the Editor). |
|---|---|---|---|
| प्रथममङ्गलाचरणम् ॥ | पान | १ | कर्तृप्रशंसा |
| ग्रन्थकर्तृवंशानुवर्णनम् ॥ | पान | २ | ,, |
| ग्रन्थकर्तृप्रशंसा ॥ | पान | ६ | ,, |
| ग्रन्थकरणप्रतिज्ञा ॥ | [पान] | ७ | ,, |
| संगीतशास्त्रारम्भः ॥ | पान | ७ | आरम्भसमर्थनम् |
| संगीतशास्त्रस्तुतिः ॥ | [पान] | ८ | संगीतस्तुतिः |
| संगीतशास्त्रनिर्णयः ॥ | [पान] | ११ | अनुक्रमणिका |
| अनुक्रमणिकासूत्रम् ॥ | [पान] | ११ | ,, |
| पदपरीक्षणम् ॥ | पान | १३ | पदम् |
| वाक्यपरीक्षणम् ॥ | पान | १३ | वाक्यम् |
| देश्यादिसंज्ञापरीक्षणम् ॥ | [पान] | १८ | संज्ञा |
| परिभाषापरीक्षणम् ॥ | [पान] | २१ | परिभाषा |
| अनुष्टुप्छन्दसां लक्षणम् ॥ | [पान] | २२ | अनुष्टुप् |
| वृत्तच्छन्दसां लक्षणम् ॥ | [पान] | २३ | वृत्तम् |
| दण्डकलक्षणम् ॥ | [पान?] | | ,, |

* The list is preceded by the words श्रीगणपतये नमः ॥ श्री शारदायै नमः ॥ अथ ग्रन्थानुक्रमणिका लिख्यन्ते ॥

| | |
|---|---|
| आर्याछन्दोलक्षणम् ॥ [पान?] | आर्यावलोकनम् |
| [प्रस्तार-परिपाटी] | प्रस्तारपरिपाटी |
| अलंकारोद्देशः | उद्देशः |
| अलंकारपरीक्षणम् | लक्षणम् |
| शब्दालंकारपरीक्षणम् | शब्दालंकाराः |
| गुणदोषविवेकः | गुणदोषाः |

पाठ्यरत्नकोशसमाप्तिः

## [ गीतरत्नकोशः ]

| | |
|---|---|
| पिण्डोत्पत्तिकथनम् ॥ पान [?] | ? |
| ध्वनिस्थाननिरूपणम् | स्थानकादि (स्थानकप्रकरणम्) |
| श्रुतिप्रकरणम् ॥ पान [?] | ,, (श्रुतिप्रकरणम्) |
| स्वरवंशादिकथनम् | ,, (स्वरप्रकरणम्) |
| ग्रामविवेकनिरूपणम् | ,, (ग्रामप्रकरणम्) |
| मूर्छनाप्रकरणम् | ,, (मूर्छनाप्रकरणम्) |
| तानप्रस्तारविवेकः | ,, (तानप्रकरणम्) |
| षाडवतानानां निरूपणम् | ,, ( ,, ) |
| औडुवताननिरूपणम् | ,, ( ,, ) |
| खण्डतानप्रकरणम् | ,, ( ,, ) |
| तानप्रस्तारनिरूपणम् | ,, ( ,, ) |
| खण्डमेरूद्धारः ॥ पान [?] | ,, ( ,, ) |
| नष्टोद्दिष्टलक्षणम् | ,, ( ,, ) |
| गीतसाधारण्यपरीक्षणम् | साधारणम् |
| वर्णालंकारपरीक्षणम् | वर्णालंकाराः |
| जातिनिरूपणारम्भः | जातिः |
| षाड्जीजातिलक्षणम् | ,, |
| आर्षभीजातिनिरूपणम् | ,, |
| धैवतीजातिनिरूपणम् | ,, |
| नैषादीजातिनिरूपणम् | ,, |
| षड्जकैशिकीजातिनिरूपणम् | ,, |
| षड्जोदीच्यवाजातिनिरूपणम् | ,, |
| षड्जमध्यमाजातिनिरूपणम् | ,, |
| गान्धारीजातिनिरूपणम् | ,, |
| मध्यमाजातिनिरूपणम् | ,, |
| पञ्चमिकाजातिनिरूपणम् | ,, |
| रक्तगान्धारीजातिनिरूपणम् | ,, |



| | |
|---|---|
| गान्धारोदीच्य[वा]जातिनिरूपणम् | जातिः |
| मध्यमोदीच्यवाजातिनिरूपणम् | ,, |
| गान्धारपञ्चमीजातिनिरूपणम् | ,, |
| आन्ध्रीजातिनिरूपणम् | ,, |
| *नन्दयन्तीजातिनिरूपणम् | ,, |
| कार्मारवीजातिनिरूपणम् | ,, |
| कैशिकीजातिनिरूपणम् | ,, |
| कपालगाननिरूपणम् | ,, |
| ब्रह्मकपालगाननिरूपणम् | ,, |
| वेदकपालगाननिरूपणम् | ,, |
| जातिकपालगाननिरूपणम् | ,, |
| कम्बलगाननिरूपणम् | ,, |
| गीतिलक्षणनिरूपणम् | ग्रामरागादि |
| रागशब्दविचारनिरूपणम् | ,, |
| ग्रामरागादि-उद्देशनिरूपणम् | ,, |
| ग्रामरागाणां निरूपणम् | ,, |
| रागभाषालक्षणानि | ,, |
| रागाङ्गोपाङ्गलक्षणानि | रागाङ्गोपाङ्गम् |
| रागभाषाङ्गलक्षणानि | भाषाङ्गम् |
| रागभाषाक्रियाङ्गलक्षणानि | क्रियाङ्गम् |
| वाग्गेयकारलक्षणम् | वाग्गेयकारः |
| गायनलक्षणम् | ,, |
| गायिनीलक्षणम् | ,, |
| गायनदोषनिरूपणम् | ,, |
| गायनकण्ठसाध्यचिकित्सा | ,, |
| शब्दभेदनिरूपणम् | शब्दभेदादि |
| गमकनिरूपणम् | गमकनिरूपणम् |
| स्थायादिनिरूपणम् | स्थायवागः |
| आलप्तिलक्षणम् | ,, |
| गायनसमूहभेदलक्षणम् | ,, |
| गीतकनिरूपणारम्भः | गीतकम् |
| मद्रकलक्षणम् | ,, |
| अपरान्तकलक्षणम् | ,, |
| उल्लोप्य[क]लक्षणम् | ,, |
| प्रकरिकालक्षणम् | ,, |

* A. निदयंति०

| | |
|---|---|
| ओवेणकलक्षणम् | गीतकम् |
| रोविन्दकलक्षणम् | ,, |
| उत्तरलक्षणम् | ,, |
| छन्दकलक्षणम् | ,, |
| आसारितलक्षणम् | ,, |
| वर्धमानलक्षणम् | ,, |
| पाणिकालक्षणम् | ,, |
| ऋचां गानलक्षणम् | ,, |
| गाथालक्षणम् | ,, |
| सामगानलक्षणम् | ,, |
| सामान्यतः प्रबन्धोद्देशः | सूडप्रबन्धाः |
| शुद्धसूडप्रबन्धनिरूपणम् | ,, |
| मिश्रसूडप्रबन्धनिरूपणम् | ,, |
| सालगसूडप्रबन्धनिरूपणम् | ,, |
| *आलिक्रमप्रबन्धनिरूपणम् | आलिक्रमप्रबन्धाः |
| प्रकीर्णकप्रबन्धनिरूपणम् | प्रकीर्णप्रबन्धाः |

गीतरत्नकोशसमाप्तिः

## [ वाद्यरत्नकोशः ]

| | |
|---|---|
| वाद्यविभागनिरूपणम् | एकतन्त्रीलक्षणम् |
| ततवाद्यनिरूपणम् | ,, |
| [एक]तन्त्रीवादननिरूपणम् | ,, |
| एकतन्त्रीनिरूपणम् | ,, |
| नकुलवीणानिरूपणम् | नकुलादि |
| आलापिनीलक्षणम् | ,, |
| पिनाकीलक्षणम् | ,, |
| निःशङ्कवीणालक्षणम् | ,, |
| रावणहस्तकलक्षणम् | ,, |
| मत्तकोकिलानिरूपणम् | मत्तकोकिलानिरूपणम् |
| किन्नरीलक्षणम् ॥ पान (?) | किन्नरीलक्षणम् |
| लघुकिन्नरीलक्षणम् | ,, |
| बृहतीकिन्नरीलक्षणम् | ,, |
| किन्नरीपरिमाणादिलक्षणम् | ,, |
| वादनहस्तव्यापारनिरूपणम् | ,, |
| मध्यमकिन्नरीलक्षणम् | ,, |

* A. आलिप्तप्रबन्ध०



| | |
|---|---|
| किन्नर्या रागोत्पत्तिलक्षणम् | किन्नरीलक्षणम् |
| वंशलक्षणम् ॥ पान [?] | वंशनिरूपणम् |
| वंशे स्वररागोत्पत्तिनिरूपणम् | वंशस्वरोत्पत्तिः |
| वंशगुणदोषनिरूपणम् | वाद्यगुणदोषाः |
| *पावादि-लक्षणम् | पावादि |
| घनवाद्यनिरूपणारम्भः | घनवाद्योल्लासः |
| मार्गताल-लक्षणम् | मार्गतालाः |
| देशीतालनिरूपणम् | देशीतालाः |
| मेरुप्रस्तारनिरूपणम् | तालप्रत्ययः |
| द्रुतमेरुलक्षणम् | ,, |
| लघुमेरुलक्षणम् | ,, |
| गुरुमेरुलक्षणम् | ,, |
| प्लुतमेरुलक्षणम् | ,, |
| संयोगमेरुलक्षणम् | ,, |
| खण्डप्रस्तारलक्षणम् | ,, |
| द्रुतादिमेरूणां नष्टादि० | ,, |
| कांस्यताललक्षणम् | तालादि |
| घण्टालक्षणम् | ,, |
| क्षुद्रघण्टिकालक्षणम् | ,, |
| घनवाद्यनिरूपणम् | घनोल्लासः संपूर्णः |
| मृदङ्गलक्षणम् | पुष्करवाद्यलक्षणम् |
| मृदङ्गपाटनिरूपणम् | ,, |
| मार्दङ्गिकगुणदोषनिरूपणम् | ,, |
| वाद्यपाटनिरूपणम् | पाटाः |
| वाद्यहस्तपाटनिरूपणम् | ,, |
| वाद्यप्रहारलक्षणम् | ,, |
| वाद्यप्रबन्धनिरूपणम् | वाद्यप्रबन्धाः |
| पटहलक्षणम् | पटहादि |
| हुडुक्कालक्षणम् | ,, |
| करटालक्षणम् | ,, |
| घटघड(ड)सलक्षणम् | ,, |
| ढवसलक्षणम् | ,, |
| ढक्कालक्षणम् ॥ पान [?] | ,, |
| तुड(कुडु)वालक्षणम् | ,, |
| तुडका(कुडुक्का)लक्षणम् | ,, |

* A. पावदी को लक्षणम्